ॐ तत्सत्

# यजुर्व्वेदीयनित्यकर्म्मपद्धतिः


कटक-निवासिना

**श्रीविहारिलाल-काश्मीरि-पण्डितेन**

सम्पादिता प्रकाशिता च


"अपवित्रः पवित्रो वा सर्व्वावस्थां गतोऽपि वा।
यः स्मरेत् पुण्डरीकाक्षं स वाह्याभ्यन्तरः शुचिः॥"


**कलिकाता-राजधान्यां**

गिरिश-विद्यारत्न-वर्त्मस्थ-चतुर्विंश संख्यक-सद्मनि

**गिरिश-विद्यारत्न-यन्त्रे**

**श्रीशशिभूषण-स्मृतिरत्न-भट्टाचार्य्येण**

मुद्रिता

शकाब्दाः १८२२, खृष्टाब्दाः १९००।

# दीबाचा ।



बहोत कारणों से पृथिवी के सब से पुराने सभ्यदेश इस भारतवर्ष के ब्राह्मणों का ब्राह्मणत्व इस कलियुग में घटता जाता है। और पुस्तकों के अभाव से नित्य नैमित्तिक क्रियाओं से उन की श्रद्धा भी घटती जाती है। वेदों के लिखने के अनुसार कर्म्म करनेवाले सदाचार ब्राह्मणों के ब्रह्मतेज की बात मानों हमलोगों को स्वप्न की तरह मालुम होती है। परन्तु किसी समय में वो बातें सच थीं। जिस ब्राह्मण जाति पर सारे हिन्दूओं का इसलोक और परलोक के भले बुरे का भरोसा है उन की ये शोचनीय हालत देख कर किस का दिल नहीं दुःखता है। आचारभ्रष्ट ब्राह्मणों को फिर क्रियाशील नहीं करने से सनातन हिन्दू जाति का भला नहीं है। उनको फिर क्रियाशील करने के लिये सब से पहले ब्राह्मणों को अपने अपने वेदोक्त शाखा के अनुसार सन्ध्या और तर्पणादिक के मन्त्रो को जानना चाहिये। वेदों में ये सब मन्त्र एक जगह पर नहीं है, बल्कि भिन्न भिन्न जगहों पर रहने के कारण

उनको इकट्ठा करके याद करना सहल बात नहीं है। इस लिये मैंने बड़े परिश्रम से चारों वेदों के मन्त्र पण्डित श्रीशिवचन्द्र न्यायरत्न, पण्डित श्रीनारायण दास, पण्डित श्रीरामचन्द्रनन्द, और पण्डित श्रीधनेश्वर शतपथी महाशयों के मदद से एकत्र संग्रह करके उनको प्रकाश करने का विचार किया है। साम, ऋक् और अथर्व्व वेदों के कितने मन्त्र मुझे नहीं मिले, इस लिये छाप नहीं सका। वर्त्तमान "यजुर्व्वेदीयनित्यकर्म्मपद्धति" सम्पन्न करके प्रकाश किया। सन्ध्या के मन्त्र कुछ कठिन होने से हरेक मन्त्र के नीचे उनका भाष्य भी दिया गया है। जहां तक मुमकिन हुआ है, मूल मन्त्रों को मूल ग्रन्थों से मिला कर देखा है। भारतवर्ष के भिन्न भिन्न देश के ब्राह्मणों के लिये इस पुस्तक को देवनागरी अक्षरों में छपवा कर विना मूल्य बांट रहा हूं। इस से ब्राह्मणों का अगर ज़रासा भी फ़ायदा होवे और अगर वे इस को दिल लगा कर पढ़ कर इसका सच्चा व्यवहार करें तो मैं अपनी मेहनत को सुफल समझूंगा। इस पुस्तक में कहीं कहीं भुल रह जाने में कुछ बड़ी बात नहीं है, इस लिये विद्वानों से मेरा विनयपूर्व्वक निवेदन है कि वे कृपा कर इन मन्त्रों को आद्य से शेष तक दिल लगा कर पढ़ें, और अगर कोइ भुल पावें तो मुझे कृपा करके लिखें, मैं अगली बेर इनको सुधारने का प्रबन्ध करूंगा।

उपसंहार में पण्डितों से मेरी ये प्रार्थना है कि अगर वे साम, ऋक् और अथर्व्व वेदोक्त यज्ञोपवीत-मन्त्र, सन्ध्या, तर्पण, वैदिक-पूजा, वैश्वदेव और आचमनादि के मन्त्र संग्रह करके मेरे पास भेजें तो, मैंने जो मन्त्र संग्रह किये हैं उन से मिलाकर, प्रकाश करने का यत्न करूंगा, और उनके पास कृतज्ञ रहूंगा। अगर वो मन्त्र मेरे मनोनीत होवेंगे और पण्डितगण कुछ पारितोषिक मागेंगे तो वो भी मैं देने को राज़ी हूं। इस से देश की बड़ी भलाइ होगी सो सबही विज्ञजन समझ सकते हैं।

काश्मीरी ब्राह्मण

श्रीविहारिलाल पण्डित

कटक।



# शुद्धिपत्रम् ।



| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| वित्तनाशं | वित्तनाशः | ३ | २३ |
| अपपश्यं | अपः पश्यं | ६ | १२ |
| न ग्राह्या मम | न ग्राह्याः मम | ७ | ८ |
| एताः | एते | ८ | ९ |
| अश्विनेयो | आश्विनेयौ | २६ | २२ |
| मन्यपतयश्च | मन्युपतयश्च | ३८ | १९ |
| न तिष्ठति नु यः | नोपतिष्ठति यः | ५० | १४ |
| ज्ञायते | जानाति | ५६ | १ |
| यथाशक्त्या | यथाशक्ति | ६८ | १ |
| अगत | आगत | ६९ | ६ |
| उच न | उत न | ७२ | ८ |
| व्याघ्रपद्यस | वैयाघ्रपद्य | ७४ | ८ |
| हरेदायु | हरेदायु | १३७ | १४ |



## अथ नित्यकर्म्मपद्धतेर्विषयानुक्रमणीयं लिख्यते ।

# यजुर्व्वेदीयनित्यकर्म्मपद्धतिः।

## ॐ श्रीगणेशाय नमः।

हृदयकमलमध्ये विश्वनाथं निधाय
गुरुवरपदपद्मं वन्दितं के विधाय।
सुकृतमनुजहृद्यो नित्यकर्म्मप्रयोगो
विरचित इह दोषं चन्तुमर्हन्ति सन्तः॥ १॥
करीन्द्राननं चिन्तयित्वा गणेशम्
भवानीसमेतं त्रिनेत्रं महेशम्।
गुरुं ज्ञानदं स्वेष्टदेवं हृदिस्थम्
मया लिख्यते नित्यकर्म्मप्रयोगः॥ २॥

## अथ सदाचारः।

सदाचारवतां पुंसां जितौ लोकावुभावपि।
साधवः चीणदोषास्तु सच्छब्दः साधुवाचकः।
तेषामाचरणं यत्तु सदाचारः स उच्यते॥ १॥
इति विष्णुपुराणे।
आचार एव धर्म्मस्य मूलं राजन् कुलस्य च।
आचाराद्विच्युतो जन्तुर्न कुलीनो न धार्म्मिकः॥ २॥
आचार एव नृपपुङ्गव सेव्यमानो
धर्म्मार्थकामफलदो भवतीह पुंसाम्।

तस्मात्सदैव विदुषावहितेन राजन्
शास्त्रोदितः प्रतिदिनं परिपालनीयः ॥ ३ ॥

इति भविष्योत्तरे ।

इयमेव परा हानिरुपसर्गोऽयमेव च ।
अभाग्यं परमञ्चैतद्वासुदेवं न यः स्मरेत् ॥ ४ ॥
ब्राह्मे मुहूर्त्ते चोत्थाय चिन्तयेदात्मनो हितम् ।
धर्म्मार्थकामान् स्वे काले यथाशक्ति न हापयेत् ॥ ५ ॥

इति स्मरणमाहात्म्यं काशीखण्डे ।

## अथ रात्रेश्चतुर्थप्रहरतृतीयभागब्राह्ममुहूर्त्तलक्षणम् ।

रात्रेश्च पश्चिमे यामे मुहूर्त्तो यस्तृतीयकः ।
स ब्राह्म इति विख्यातो विहितः सम्प्रबोधने ॥ १ ॥

इति मनुः ।

## अथ प्रातःस्मरणम् ।

केशवः पुण्डरीकाक्षो माधवो मधुसूदनः ।
चत्वारीमानि नामानि प्रातरुत्थाय यः पठेत् ।
अचलां श्रियमाप्नोति विष्णुलोकं स गच्छति ॥ १ ॥
ब्रह्मा मुरारिस्त्रिपुरान्तकारी भानुः शशी भूमिसुतो बुधश्च ।
गुरुश्च शुक्रः शनिराहुकेतवः सर्व्वे ग्रहाः शान्तिकरा भवन्तु मे ॥२॥
प्रभाते यः स्मरेन्नित्यं दुर्गादुर्गाक्षरद्वयम् ।
आपदस्तस्य नश्यन्ति तमः सूर्य्योदये यथा ॥ ३ ॥
अहल्या द्रौपदी तारा कुन्ती मन्दोदरी तथा ।
पञ्च कन्याः स्मरेन्नित्यं महापातकनाशनम् ॥ ४ ॥

पुण्यश्लोको नलो राजा पुण्यश्लोको युधिष्ठिरः।
पुण्यश्लोका च वैदेही पुण्यश्लोको जनार्द्दनः॥ ५॥
लोकेश चैतन्यमयाधिदेव श्रीकान्त विष्णो भवदाज्ञयैव।
प्रातः समुत्थाय तव प्रियार्थं संसारयात्रामनुवर्त्तयिष्ये॥ ६॥
जानामि धर्म्मं न च मे प्रवृत्तिर्जानाम्यधर्म्मं न च मे निवृत्तिः।
त्वया हृषीकेश हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि॥७॥
इति महाभारते।

## अथ गुरुस्मरणम्।

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः।
गुरुः साक्षात्परं ब्रह्म तस्मै श्रीगुरवे नमः॥ १॥
अखण्डमण्डलाकारं व्याप्तं येन चराचरम्।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः॥ २॥
अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः॥ ३॥
श्लोकत्रयं पठेत्प्रातः गुरुपादाम्बुजं स्मरन्।
त्रिवर्गफलभागत्र मृते मोक्षपदं व्रजेत्॥ ४॥
इति पुरश्चरणचन्द्रिकायाम्।

## अथ कलिकलुषनाशनस्मरणम्।

कर्कोटकस्य नागस्य दमयन्त्या नलस्य च।
ऋतुपर्णस्य राजर्षेः कीर्त्तनं कलिनाशनम्॥ १॥
कार्त्तवीर्य्यार्ज्जुनो नाम राजा बाहुसहस्रभृत्।
योऽस्य सङ्कीर्त्तयेन्नाम प्रातरुत्थाय मानवः।
न तस्य वित्तनाशं स्यान्नष्टञ्च लभ्यते॥ २॥
इति महाभारते।

## अथ शय्यात्यागपूर्व्वकभूमिप्रार्थना ।

समुद्रमेखले देवि पर्व्वतस्तनमण्डले ।
विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ॥ १ ॥

इति जैमिनिः ।

## अथ घृत मुखदर्शनफलम् ।

स्वमाननं घृते पश्येद्यदीच्छेच्चिरजीवितम् ।

इति ब्रह्मपुराणे ।

## अथ प्रातः शुभाशुभदर्शनफलम् ।

दध्याज्यादर्शसिद्धार्थविल्वगोरोचनास्रजाम् ।
दर्शनं स्पर्शनं कार्य्यं प्रबुद्धेन शुभावहम् ॥ १ ॥

इति भावप्रकाशे ।

श्रोत्रियं सुभगामग्निं गां चैवाग्निचितं तथा ।
प्रातरुत्थाय यः पश्येदापद्भ्यः स विमुच्यते ॥ २ ॥
पापिष्ठं दुर्भगां मद्यं नग्नमुत्कृत्तनासिकम् ।
प्रातरुत्थाय यः पश्येत्तत्कलेरुपलक्षणम् ॥ ३ ॥

इति छान्दोग्यपरिशिष्टे ।

## अथ मुखप्रक्षालनमन्त्रः ।

ॐ वश्यमुखी राजमुखी स्वाहा ।
वशीभवन्ति सर्व्वे तु सप्तभिः क्षालिते मुखे ।
सर्व्वेषु वश्यमन्त्रेषु मन्त्रराजोऽयमीरितः ॥ १ ॥

इति कामरत्नतन्त्रे ।

## अथ सूर्य्यदेवप्रार्थना।

उदयगिरिनिवासस्तप्तहेमप्रकाश-
स्तिमिरपटलहन्ता सर्व्वलोकैकचक्षुः।
गगनतलविहारी बान्धवः पद्मिनीनां
स दहतु मम पापं भास्करं तं नमामि ॥ १ ॥

इति साम्बपुराणे।

## अथ मूत्रत्यागसमये भूमिप्रार्थना।

धरे त्वदाश्रितं सर्व्वं त्वञ्चैव केशवाश्रिता।
मूत्रं त्यजाम्यहं देवि क्षमस्व तत् क्षमावति ॥ १ ॥

## अथ मलादित्यागविधिः।

शिरः प्रच्छाद्य कुर्व्वीत शकृन्मूत्रविसर्ज्जनम्।
प्रत्यङ्मुखस्तु पूर्व्वाह्णे सायाह्ने प्राङ्मुखस्तथा।
उदङ्मुखस्तु मध्याह्ने निशायां दक्षिणामुखः ॥ १ ॥

इति यमः।

## अथ मलमूत्रविसर्ज्जनसमयप्राग्भूमिप्रार्थना।

उत्तिष्ठन्तु सुराः सर्व्वे यक्षराक्षसकिन्नराः।
पिशाचा गुह्यकाः सिद्धाः मलमूत्रं करोम्यहम् ॥ १ ॥

## अथ मलमूत्रत्यागस्थानवर्णनम्।

दशहस्तं परित्यज्य मूत्रं कुर्य्याज्जलाश्रयात्।
शतहस्तं पुरीषन्तु तीर्थे नद्याश्चतुर्गुणम् ॥ १ ॥

अरण्ये निर्जने रात्रौ चौरव्यालाकुले पथि ।
कृत्वा मूत्रपुरीषन्तु द्रव्यहस्तो न दुष्यति ॥ २ ॥

इत्याश्वलायनः ॥

## अथ मलमूत्रत्यागे निषिद्धस्थानानि ।

न मूत्रं पथि कुर्व्वीत न भस्मनि न गोव्रजे ।
न फालकृष्टे न जले न चैत्ये न च पर्व्वते ॥ १ ॥
न जीर्णदेवायतने न वल्मीके न शाद्वले ।
न ससत्त्वेषु गर्त्तेषु न गच्छन्नापि संस्थितः ।
प्रमादाद्ये च कुर्व्वन्ति ते भवन्ति गतायुषः ॥ २ ॥
न नदीतीरमासाद्य न च पर्व्वतमस्तके ।
वाय्वग्निविप्रानादित्यमपपश्यंस्तथैव च ।
न कदाचन कुर्व्वीत विण्मूत्रस्य विसर्ज्जनम् ॥ ३ ॥

इति बृहन्मनुः ॥

## अथ शौचनिमित्तमृत्तिकानिरूपणम् ।

अष्टाङ्गुलं खनित्वा तु उद्धृत्य च मृदं ततः ।
एवन्तु मृत्तिका ग्राह्या ह्यमेध्या त्वन्यथा भवेत् ॥ १ ॥
कृमिकीटादिरहितां तीर्थदेशे निधाय च ।
मृत्तिकान्तु निरीक्षेत भूमिञ्च प्रार्थयेत्पुनः ॥ २ ॥

इति याज्ञवल्क्यः ॥

## अथ मृत्तिकाग्रहणसमये भूमिप्रार्थना ।

त्वं देवि सर्व्वभूतानां क्षमारूपेण नित्यशः ।
अशेषब्रह्मकर्म्मार्थं मृत्तिकां देहि मे महि ॥ १ ॥

इति हारीतः ।

## अथ वर्णभेदेन मृत्तिकाग्रहणतारतम्यम् ।

शुक्ला रक्ता तथा पीता कृष्णा चैव तु मृत्तिका ।
वर्णानामानुपूर्व्वेण शौचार्थं कश्यपोऽब्रवीत् ॥ १ ॥

## अथ शौचनिमित्तनिषिद्धमृत्तिकानिरूपणम् ।

भस्मकेशतुषाङ्गारतृणास्थिशर्करान्विताः ।
विवर्णाश्च विगन्धाश्च मृदो नित्यं विवर्ज्जयेत् ॥ १ ॥

इति मनुः ।

कुड्यान्तर्जलवल्मीकमूषिकोत्खातवर्त्मसु ।
श्मशाने शौचदेशे च न ग्राह्या सप्त मृत्तिकाः ॥ २ ॥

इति बौधायनः ।

## अथ देशान्तरे शौचनियमः ।

यस्मिन्देशे च यत्तोयं या भूमी या च मृत्तिका ।
सैव तत्र प्रशस्ता स्यात्तया शौचं विधीयते ॥ १ ॥

इति ऋष्यशृङ्गः ।

## अथ मृत्तिकाशौचविधिः ।

एका लिङ्गे गुदे तिस्रो दश वामकरे तथा ।
उभयोः सप्त दातव्या चरणौ च त्रिभिस्त्रिभिः ॥ १ ॥
तिस्रस्तु मृत्तिका देया नखशोधनमुत्तमम् ।
हस्तपृष्ठे तथा षट् षट् मृच्छौचञ्च विधीयते ॥ २ ॥
एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ।
त्रिगुणं स्याद्वनस्थानां यतीनाञ्च चतुर्गुणम् ॥ ३ ॥

## अथ देशकालपात्रानुसारेणाचारस्यापि तारतम्यम् ।

देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम् ।
उपपत्तिमवस्थाञ्च ज्ञात्वा शौचं प्रकल्पयेत् ॥ १ ॥

स्वदेशे सर्व्वमाचारं परदेशे तदर्द्धकम्।
नगरे पादमेकन्तु पथि शूद्रवदाचरेत्॥ २॥

## अथ दन्तकाष्ठनिरूपणम्।

सर्व्वे कण्टकिनः पुण्याः क्षीरिणश्च यशस्विनः।
कटुतिक्तकषायाश्च धनारोग्यसुखप्रदाः॥ १॥
खदिरश्च करञ्जश्च कदम्बश्च वटस्तथा।
तिन्तिड़ी वेणुपृष्ठञ्च आम्रनिम्बौ तथैव च॥ २॥
अपामार्गश्च विल्वश्च अर्कश्चोदुम्बरस्तथा।
एताः प्रशस्ताः कथिताः दन्तधावनकर्म्मणि॥ ३॥

इति काशीखण्डे।

## अथ दन्तकाष्ठभङ्गसमये वृक्षप्रार्थना।

आयुर्बलं यशो वर्चः प्रजापशुवसूनि च।
ब्रह्मप्रज्ञाञ्च मेधाञ्च त्वन्नो देहि वनस्पते॥ १॥

इति कात्यायनः।

## अथ दन्तधावनसमये दिङ्निरूपणम्।

उदयात्प्राक् पूर्व्वमुख उदये तूत्तरामुखः।
दक्षिणां पश्चिमाञ्चैव न कुर्य्याद्दन्तधावनम्॥ १॥

इति पद्मपुराणे।

## अथ दन्तघर्षणमन्त्रः।

ॐ अन्नाद्याय व्यूहध्वꣳ सोमराजाय मागमत्।
स मे मुखं प्रमार्क्ष्यन्ते यशसा च बलेन च॥ १॥

इति काण्वसंहितायाम्।

## अथ स्नानानन्तरपुष्पचयननिषेधवाक्यम् ।

स्नानङ्कृत्वा तु ये केचित्पुष्पं चिन्वन्ति वै द्विजाः ।
देवतास्तन्न गृह्णन्ति भस्मीभवति दारुवत् ॥ १ ॥

इति लघुहारीतः ।

## अथ पञ्चदेवतापुष्पनिरूपणम् ।

तत्र विष्णुप्रदेयपुष्पाणि ।

शेफालिका-वकुल-चम्पक-पाटलाब्जैः
पुन्नाग-जाति-करवीर-रसालपुष्पैः ।
विल्व-प्रवाल-तुलसीदल-मल्लिकाभि-
स्त्वां पूजयामि जगदीश्वर वासुदेव ॥ १ ॥

इति गौतमीतन्त्रे ।

विष्णोरदेयपुष्पाणि ।

मन्दार-मर्क-धुस्तूरं शाल्मली काञ्चनालकम् ।
निषिद्धं विष्णुपूजायां पुष्पं वैभीतकं तथा ॥ १ ॥
कुटजश्चोग्रगन्धश्च शिरीषश्च जनार्द्दने ।
निवेदितं भयं रोगं निःसत्त्वञ्च प्रयच्छति ॥ २ ॥

शिवप्रदेयपुष्पाणि ।

शेफाली वकुलं वकं विचकिलं काश्यं कुशं किंशुकं
धुस्तूरार्क-जया-कदम्ब-कुटजं मन्दार-नागार्ज्जुनम् ।
सेवन्ती तगरी सरोजमुभयं सर्व्वोत्पलं पाटली
पुन्नागं करवीर-कुङ्कुममिदं पुष्पं शिवे दीयताम् ॥ १ ॥

इति शैवचिन्तामणौ ।

शिवस्यादेयपुष्पाणि।

शिरीष-बन्धूक-विभीतकानां मदन्तिका-पुण्ड्रक-केतकानाम्।
करञ्ज-सर्ज्जेन्द्रमहीरुहाणां कुन्दस्य पुष्पं न शिवे प्रशस्तम्॥ १॥

इति सुरार्च्चनचन्द्रिकायाम्।

गणेशप्रदेयपुष्पाणि।

करवीरोत्पलद्वन्द्व-विजया-चम्पकानि च।
पुन्नाग-नाग-नलिनी-कुन्द-मन्दारकाणि च॥ १॥
जाती-जीव-जवापुष्प-सुमा विल्व-कुरण्टकौ।
पाटल्यशोक-दमन-वधूकुब्जापराजिता॥ २॥
नन्दा धवलदूर्व्वादि ह्वद्यान्यन्यानि यानि च।
स्वागमोक्तानि पुष्पाणि गणेशस्य प्रियाणि च॥ ३॥

इति गणेशार्च्चनचन्द्रिकायाम्।

दुर्गाप्रदेयपुष्पाणि।

कुन्द-मन्दार-पुन्नाग-पाटली-नागकेशरम्।
आरग्वधं कर्णिकारं जयन्ती नवमल्लिका॥ १॥
सौगन्धिकं सकक्कोलं पुन्नागाशोक-मल्लिकाः।
अन्यान्यपि सुगन्धीनि पुष्पपत्राणि देशिकैः॥ २॥

इति शक्तिपल्लवे।

सूर्य्यप्रदेयपुष्पाणि।

जाती-कुन्द-शमी-कुशेशय-कुशाशोकं वकं किंशुकं
पुन्नागं करवीर-चम्पक-जवा-शेफालिका-कुङ्कुमम्।
वासन्ती शतपत्रिका विचकिलं मन्दार-मर्कार्द्धयं
पीताम्लानक-नागकेशरमिदं पुष्पं रवौ शस्यते॥ १॥

इति सूर्य्यार्च्चनचन्द्रिकायाम्।

## अथ पञ्चदेवानामदेयपुष्पाणि ।

अक्षतानर्क-धुस्तूरौ विष्णौ नैवार्पयेत्सुधीः ।
बन्धूकं केतकीं कुन्दं केशरं कुटजं जयाम् ॥ १ ॥
शङ्करं नार्पयेद्विद्वान्मालतीं यूथिकामपि ।
शक्तौ दूर्व्वार्क-मन्दारान्मालूरं तगरं रवौ ।
विनायके तु तुलसीं नार्पयेज्जातुचिद्बुधः ॥ २ ॥

इति सुरार्च्चनचन्द्रिकायाम् ।

## अथ चौरमुहूर्त्तनिर्णयः ।

गीर्वाणाम्बुप्रतिष्ठापरिणयदहनाधानगेहप्रवेशा-
श्चौलं राजाभिषेको व्रतमपि शुभदं नैव याम्यायने स्यात् ।
नो वा बाल्यास्तवार्द्धे सुरगुरुसितयोर्नैव केतूदये स्यात्
पक्षं वार्द्धञ्च केचिज्जहति तमपरे यावदीक्षान्तदुग्रे ॥ १ ॥

गुरुः पश्चाद्भृगोर्बाल्यं त्रिदशाहञ्च वार्द्धकम् ।
पक्षं पञ्चदिनं ते द्वे गुरोः पक्षमुदाहृते ॥ २ ॥
ते दशाहं द्वयोः प्रोक्ते कैश्चित्सप्तदिनं परैः ।
त्र्यहन्त्वात्ययिकेऽप्यन्यैरर्द्धाहञ्च त्र्यहं विधोः ॥ ३ ॥

चूड़ावर्षात्तृतीयात्प्रभवति विषमेऽष्टाद्यरिक्तार्कषष्ठी
पर्व्वोनाहे विचैत्रोदगयनसमये ज्ञेन्दुशुक्रेज्यकानाम् ।
वारे लग्नांशयोश्चास्वभनिधनतनौ नैधने शुद्धियुक्ते
शाक्तोपेतैर्विमैत्रे मृदुचरलघुभैरायषट्त्रिस्थपापैः ॥ ४ ॥

पुष्यपुनर्व्वसुरेवतिहस्ता श्रवणधनिष्ठमृगाश्विनिचित्रा ।
वासववारुणवायुसमेता द्वादशभे नृप चौरप्रतिष्ठा ॥ ५ ॥

क्षीणचन्द्रकुजसौरिभास्करैर्मृत्युशस्त्रमृतिपङ्गुताज्वराः ।
स्युः क्रमेण बुधजीवभार्गवैः केन्द्रगैश्च शुभमिष्टतारया ॥ ६ ॥

ताराद‍ौष्ठेऽब्जे त्रिकोणोच्चगे वा चौरं सत्यात्सौम्यमित्रस्ववर्गे ।
सौम्ये भेऽब्जे शोभने दुष्टतारा शस्ता ज्ञेया चौरयात्रादिकृत्ये ॥ ७ ॥

पञ्चमासाधिके मातुर्गर्भे चौलं शिशोर्न सत् ।
पञ्चवर्षाधिके श्रेष्ठं गर्भिण्यामपि मातरि ॥ ८ ॥

ऋतुमत्यां सूतिकायां सूनोश्चौलादि नाचरेत् ।
ज्येष्ठापत्यस्य न ज्यैष्ठे कैश्चिन्मार्गेऽपि नेष्यते ॥ ९ ॥

दन्तचौरनखक्रियात्र विहिता चौलोदिते वारभे
पातङ्गारखीन्विहाय नवमं षष्ठञ्च सन्ध्यां तथा ।
रिक्तां पर्व्वनिशां निराशनरणग्रामप्रयाणोद्यते
स्नाताभ्यक्तकृताशनैर्न हि पुनः कार्य्या हितप्रेप्सुभिः ॥ १० ॥

क्रतुपाणिपीड़मृतिबन्धमोचणे क्षुरकर्म्म च द्विजनृपाज्ञया चरेत् ।
शववाहतीर्थगमसिन्धुमज्जनक्षुरमाचरेन्न खलु गर्भिणीपतिः ॥ ११ ॥

मासं हरेत्चौरमिहार्य्यमायुः शनैश्वरः पञ्च कुजस्तथाष्टौ ।
आचार्य्यभृग्विन्दुबुधाः क्रमेण दद्याद्दशैकादश सप्त पञ्च ॥ १२ ॥

मानं हन्ति गुरोर्वारे शुक्रे पुत्त्रक्षयो भवेत् ।
शनिभौमे भवेद्रोगी मनस्तापी रवेर्दिने ॥ १३ ॥

द्वे कृत्तिके त्रीणि पूर्व्वाः पञ्च पित्रेऽष्ट रोहिणी ।
सप्तमूलानुराधाभ्यां देवपुत्त्रो न जीवति ॥ १४ ॥

नृपाणां हितं चौरभेऽश्मश्रुकर्म्म
दिने पञ्चमे भास्क(?)रस्योदये वा ।
षड्भिस्त्रिभिस्त्रोऽष्टकं पञ्चपित्रो-
ऽब्दतोऽभ्यर्य्यमा चौरकृन्मृत्युमेति ॥ १५ ॥

इति मुहूर्त्तचिन्तामणौ ।

---

## अथ दर्भविचार:।

नभोमासे त्वमावस्या तस्यां दर्भोच्चय: स्मृत:।
अयातयामास्ते दर्भा नियोक्तव्या: पुन: पुन:॥ १॥
शुचिदेशे शुचिर्भूत्वा स्थित्वा पूर्व्वोत्तरामुख:।
ॐकारेणैव मन्त्रेण सकृदेव कुशान् स्पृशेत्॥ २॥

### अथ कुशस्पर्शनमन्त्र:।

विरञ्चिना सहोत्पन्न: परमेष्ठिनिसर्गज:।
नुद सर्व्वाणि पापानि दर्भ स्वस्तिकरो भव॥ १॥
विना दर्भेण यत्स्नानं यच्च दानं विनोदकम्।
असंख्यातञ्च यज्जप्यं तत्सर्व्वं निष्फलं भवेत्॥ २॥

इति प्रयोगपारिजाते।

कुशै: पूतं भवेत् स्नानं कुशेनोपस्पृशेज्जलम्।
कुशेन चोद्धृतं तोयं सोमपानेन सम्मितम्॥ ३॥
त्रिशाखस्तु भवेद्दर्भश्चतु:शाख: कुश: स्मृत:।
पञ्चशाखस्तु कल्माष: षट्शाख: प्रवरस्तथा॥ ४॥
सप्तशाखस्तु कुतप ऊर्द्धं वर्हि: प्रकीर्त्तित:।
एकशाखो द्विशाखो वा तृणवत्कथ्यते बुधै:॥ ५॥
सप्तपत्रा: शुभा दर्भास्तिलच्चेत्रसमुद्भवा:।
अच्छिन्नाग्रा अशुष्काग्रा: प्रादेशाग्रा: प्रमाणत:॥ ६॥

इति हारीत:।

### अथ त्याज्या दर्भा:।

अपूता गर्भिता दर्भा ये चान्ये छेदिता नखै:।
मार्गजा अग्निदग्धाश्च, कुशान् यत्नेन वर्ज्जयेत्॥ १॥

इति हारीत:।

समित्पुष्पकुशादीनि श्रोत्रिय: स्वयमाहरेत्।
शूद्रानीतै: क्रयक्रीतै: कर्म्म कुर्व्वन् पतत्यध:॥ २॥

अथ पवित्रलक्षणम् ।

अनन्तगर्भिणं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥ १ ॥
चतुर्भिर्दर्भविदलैः पवित्रं ब्राह्मणस्य वै ।
एकैकं ह्रासयेत्तन्तु वर्णे वर्णे यथाक्रमम् ॥ २ ॥
त्रिगुणीकृतरज्जुन्तु त्रिवृत्त्या सन्नियोजयेत् ।
ब्रह्मग्रन्थिः स विज्ञेयः सदा मौञ्ज्यादिकर्म्मसु ॥ ३ ॥
समूलाग्रौ विगर्भौ तौ कुशौ द्वौ दक्षिणे करे ।
सव्ये चैव तथा त्रीणि बिभृयात्सर्व्वकर्म्मसु ॥ ४ ॥
स्नाने दाने जपे होमे स्वाध्याये पितृतर्पणे ।
पवित्रन्तु करे कृत्वा सौवर्णं राजतन्तु वा ॥ ५ ॥

इति कात्यायनः

अनामिकाधृतं हैमं तर्ज्जन्यां रूप्यमेव च ।
कनिष्ठिकाधृतं खड्गं तेन पूतो भवेन्नरः ॥ ६ ॥
मूलपर्व्वणि कुर्व्वाणो महत्या क्रियते श्रिया ।
मध्यपर्व्वणि कुर्व्वाणः पुत्रदारैर्व्वियुज्यते ॥ ७ ॥
अनामिकाग्रपर्व्वस्थं पवित्रं बिभृयात्सदा ।
सपवित्रेण हस्तेन कुर्य्यादाचमनक्रियाम् ।
नोच्छिष्टं तत्पवित्रं स्याद्भुक्तोच्छिष्टन्तु वर्ज्जयेत् ॥ ८ ॥

इति योगियाज्ञवल्क्यः

## अथ सप्तविधस्नाननियमः ।

मान्त्रं पार्थिवमाग्नेयं वायव्यं दिव्यमेव च ।
वारुणं मानसञ्चेति स्नानं सप्तविधं स्मृतम् ॥ १ ॥

तल्लक्षणम्।

ॐ शन्न आपस्तु वै मान्त्वं मृदा लिप्तन्तु पार्थिवम्।
भस्मना स्नानमाग्नेयं स्नानं गोरजसानिलम्॥ २॥
आतपे चैव या वृष्टिर्दिव्यस्नानं तदुच्यते।
वह्निर्नद्यादिषु स्नानं वारुणं प्रोच्यते बुधैः॥ ३॥
ध्यानं यन्मनसा विष्णोर्मानसं तत्प्रकीर्त्तितम्।
असामर्थ्येन कायस्य कालदेशाद्यपेक्षया।
एतत्तुल्यफलं ज्ञेयमिति प्राह पराशरः॥ ४॥

इति पराशरः।

अथ तैलग्रहणे निषिद्धप्रसिद्धदिनानि।

तन्नियमः।

रवौ तापं भृशं कुर्य्यात्सोमे कान्तिं लभेन्नरः।
भौमे मृत्युभयं विद्धि बुधे लक्ष्मीं लभेन्नरः॥ १॥
गुरौ दरिद्रतामेति भार्गवे चासुखं भवेत्।
सुखं भोगः शनौ ज्ञेयं वारादिफलमुत्तमम्॥ २॥
अशक्तौ चेद्दशं कार्य्यं श्रूयतामृषिसत्तमाः।
अर्के पुष्पं क्षिपेत्तैले गुरौ दूर्व्वाङ्कुरं नवम्॥ ३॥
भौमवारे रजश्चैव भार्गवे जलविन्दुकम्।
नित्यमभ्यङ्गके चैव वासितेनैव दूषणम्॥ ४॥
केनापि च न कर्त्तव्यं श्राद्धे च ग्रहणे तथा।
उपवासे तथा प्राप्ते प्रतिपद्दिवसे तथा॥ ५॥
अतैल सार्षपं प्रोक्तं यच्च तैलं सुवासितम्।
मन्त्राभिमन्त्रितं तैलं न दुष्टं मनुरब्रवीत्॥ ६॥
ॐ अश्वत्थाम्ने नम इति मन्त्रेण कौ क्षिपेत्त्रिभिः।

वामपादे घृतं तैलं वामपादे च लेपनम् ।
सर्व्वाङ्गे लेपनङ्कृत्वा पश्चाच्छिरसि धारयेत् ॥ ७ ॥

इति शिवपुराणे ।

स्नानसमये स्वशरीरे मृत्तिकानुलेपनमन्त्रः ।

अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे ।
मृत्तिके हर मे पापं यन्मया दुष्कृतङ्कृतम् ॥ १ ॥

स्नानसमये गङ्गाप्रार्थना ।

गङ्गे देवि जगन्मातः पादाभ्यां सलिलं तव ।
स्पृशामि त्वपराधं मे प्रसन्ना क्षन्तुमर्हसि ॥ १ ॥

अथ स्नानाकरणे दोषमाह ।

प्रातःस्नानं विना पुंसां पापित्वं कर्म्मसु स्मृतम् ।
होमे जपे विशेषेण तस्मात् स्नानं समाचरेत् ॥ १ ॥

इति गङ्गामाहात्म्ये ।

स्नानहीनो नरः पापी स्नानहीनोऽशुचिः सदा ।
अस्नानान्नरकं भुक्त्वा पुक्कसादिषु जायते ॥ २ ॥

इति कौर्म्ये ।

अथ वारुणस्नानप्रकारत्रयम् ।

नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते ॥ १ ॥

नित्यस्नाननियमः ।

प्रातः समाचरेत् स्नानं तच्च नित्यमिति स्मृतम् ॥ १ ॥

नैमित्तिकस्नाननियमः ।

उच्छिष्टाद्युपघातादौ तथैव मृतसूतके ।
चन्द्रसूर्य्योपरागादौ स्नानं नैमित्तिकं स्मृतम् ॥ १ ॥

काम्यस्नाननियमः।

पुण्यस्नानादिकं स्नानं दैवज्ञविधिनोदितम्।
तद्धि काम्यं समुद्दिष्टं नाकामस्तु प्रयोजयेत्॥ १॥

इति जाबालिः।

कापिलस्नाननियमः।

प्रातःस्नानेऽप्यशक्तश्चेत्कापिलं स्नानमाचरेत्।
नाभेरधः प्रवेश्याप्सु कटिं प्रक्षालयेज्जलैः।
जलार्द्रकर्पटेनाङ्गशोधनं कापिलं भवेत्॥ १॥
स्नानानां मानसं स्नानं मन्वाद्यैः परमं स्मृतम्।
कृतेन येन मुच्यन्ते गृहस्था अपि वै द्विजाः॥ २॥

इति पराशरः।

अथ ग्रहणकालप्राग्भोजननिषेधवाक्यम्।

सूर्य्यग्रहे तु नाश्नीयात्पूर्व्वं यामचतुष्टयम्।
चन्द्रग्रहे तु यामांस्त्रीन् बालवृद्धातुरं विना॥ १॥
ग्रस्तास्तेऽप्युदये पूर्व्वं नाहर्भोजनमीरितम्।
अदृष्ट्वा तौ तु नाश्नीयाद्ग्रस्तास्तमितयोस्तयोः॥ २॥

चन्द्रग्रहणमुक्तिसमयस्नाने चन्द्रप्रार्थना।

यथापदो विमुक्तोऽसि राहोर्वदनसङ्कटात्।
तथा त्वं रोहिणीनाथ आपदो मां विमोचय॥ १॥

सूर्य्यग्रहणमुक्तिसमयस्नाने सूर्य्यप्रार्थना।

यथापदो विमुक्तोऽसि राहोर्वदनसङ्कटात्।
तथा त्वं पद्मिनीनाथ आपदो मां विमोचय॥ १॥

ग्रहणमुक्तिस्नानसमये राहुप्रार्थना।

स्वस्थानं गम्यतां राहो त्यज्यतां चन्द्रसङ्गम:।
कर्म्म चाण्डालयोगोत्थं मम पापक्षयं कुरु॥ १॥
सूर्य्योपरागे 'चन्द्रसङ्गम'स्थाने 'सूर्य्यसङ्गम:' इति पठेत्।

## अथ आचमननियम:।

गोकर्णाकृतिहस्तेन माषमग्नजलं पिबेत्।
तन्न्यूनमधिकं वापि पीतं तद्रुधिरं भवेत्॥ १॥

आचमनफलम्।

दन्तौष्ठशुद्धि: प्रथमे जिह्वाताल्वोर्द्वितीयके।
तृतीये कण्ठदेशस्य नाभिशुद्धिश्चतुर्थके॥ १॥
पञ्चमे पादमूलस्य षष्ठे सर्व्वाणि शोधयेत्।
षड़ाचमनमित्युक्तं तद्द्विराचमनं विदु:॥ २॥
त्रिवाराचमने सकृदाचमनविधि: स्मृत:।
षड्वाराचमने तद्वद्द्विराचमनमेव च॥ ३॥

इति कात्यायन:।

## अथ सङ्कल्प:।

गङ्गाद्या: सरितोऽत्रागच्छत।
गङ्गे च यमुने चैव गोदावरि सरस्वति।
नर्म्मदे सिन्धु-कावेरि जलेऽस्मिन् सन्निधिं कुरु॥ १॥
कुरुक्षेत्र-गया-गङ्गा-प्रभास-पुष्कराणि च।
एतानि पुण्यतीर्थानि स्नानकाले भवन्त्विह॥ २॥

तिथिर्विष्णुस्तथा वारो नक्षत्रं चन्द्र एव च ।
योगश्च करणञ्चैव सर्व्वं विष्णुमयं जगत् ॥ ३ ॥
ॐ विष्णुः ॐ विष्णुः ॐ विष्णुः ।
शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्व्वविघ्नोपशान्तये ॥ ४ ॥
स्मृते सकलकल्याणभाजनं यत्र जायते ।
पुरुषं तमजं नित्यं व्रजामि शरणं हरिम् ॥ ५ ॥
शङ्खचक्रगदापाणे द्वारकानिलयाच्युत ।
गोविन्द पुण्डरीकाक्ष रक्ष मां शरणागतम् ॥ ६ ॥

ॐ विष्णुः ॐ विष्णुः ॐ विष्णुः अद्य अमुके मासि अमुके पक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकराशौ स्थिते भास्करे अमुकराशौ स्थिते चन्द्रमसि एवं यथास्थानावस्थितेषु भौमादि-ग्रहयोगलग्नकरणमुहूर्त्तांशकेषु एवंविधविशेषणविशिष्टायां पुण्यतिथौ अमुकगोत्रः श्रीमान् अमुकदेवशर्म्मा (ब्राह्मणपक्षे अमुकदेवशर्म्मा, क्षत्रियपक्षे अमुकवीरवर्म्मा, वैश्यपक्षे अमुक-गुप्तः, शूद्रपक्षे अमुकदासः ; एवं ब्राह्मणस्त्रीपक्षे अमुका देवी, क्षत्रियस्त्रीपक्षे अमुका वीरवर्म्मिणी, वैश्यस्त्रीपक्षे अमुका गुप्ता, एवं शूद्रस्त्रीपक्षे अमुका दासी) श्रीविष्णुप्रीतिकामः अस्मिन्नल्पा-वाहितजले अस्यां गङ्गायां स्नानमहं करिष्ये। ब्राह्मणपक्षे विष्णुः विष्णुः विष्णुः इत्यस्य पुरः ॐ तत्सत् इत्युच्चार्य्य पूर्व्व-वदुच्चारणीयमिति ।

## गङ्गाया आवाहनम प्रार्थना च ।

आद्या गोदावरी गङ्गा द्वितीया च पुनःपुना ।
तृतीया कथिता रेवा चतुर्थी जाह्नवी स्मृता ॥ १ ॥

कावेरी गोमती कृष्णा ब्राह्मी वैतरणी तथा।
विष्णुपादाग्रसम्भूता नवधा भूमिसंस्थिता॥ २॥
विष्णुपादाग्रसम्भूते गङ्गे त्रिपथगामिनि।
धर्म्मद्रवीति विख्याते पापं मे हर जाह्नवि॥ ३॥

गङ्गामाहात्म्यम्।

गङ्गा गङ्गेति यो ब्रूयाद्योजनानां शतैरपि।
मुच्यते सर्व्वपापेभ्यो विष्णुलोकं स गच्छति॥ १॥
गङ्गाकर्द्दमलिप्ताङ्गो गङ्गा गङ्गेति कीर्त्तयन्।
सर्व्वकल्मषनाशिन्यां गङ्गायां स्नानमाचरेत्॥ २॥

इति गङ्गामाहात्म्यं।

मृत्तिकालेपनसमये गङ्गाप्रार्थना।

त्वत्कर्द्दमैरतिस्निग्धैः सर्व्वपापविनाशकैः।
मया त्वं लिप्यते गात्रं मातर्मे पातकं हर॥ १॥

गङ्गानमस्कारः।

सद्यः पातकसंहन्त्री सद्यो दुःखविनाशिनी।
सुखदा मोक्षदा गङ्गा गङ्गैव परमा गतिः॥ १॥

स्नानक्रमः।

ततः कराभ्यामाच्छाद्य नासिकाश्रवणादिकान्।
स्नायात्सम्यक्सर्व्वदैवमङ्गं वस्त्रेण मार्ज्जयेत्॥ १॥

मार्ज्जनक्रमः।

मुखं वक्षःस्थलं पृष्ठं बाहूदरशिरांसि च।
प्रमार्ज्जनात् क्रमेणाङ्गं गोदानस्य फलं लभेत्॥ १॥

# अथ गङ्गास्तवपाठः ।

ॐ गङ्गायै नमः ।

देवि सुरेश्वरि भगवति गङ्गे त्रिभुवनतारिणि तरलतरङ्गे ।
शङ्करमौलिनिवासिनि विमले मम मतिरास्तां तव पदकमले ॥ १ ॥
भागीरथि सुखदायिनि मातस्तव जलमहिमा निगमे ख्यातः ।
नाहं जाने तव महिमानं त्राहि कृपामयि मामज्ञानम् ॥ २ ॥
हरिपददात्रि तरङ्गिणि गङ्गे हिमविधुमुक्ताधवलतरङ्गे ।
दूरीकुरु मम दुष्कृतिभारं कुरु कृपया भवसागरपारम् ॥ ३ ॥
तव जलममलं येन निपीतं परमपदं खलु तेन गृहीतम् ।
मातर्गङ्गे त्वयि यो भक्तः किल तं द्रष्टुं न यमः शक्तः ॥ ४ ॥
पतितोद्धारिणि जाह्नवि गङ्गे खण्डितगिरिवरमण्डितभङ्गे ।
भीष्मजननि खलु मुनिवरकन्ये पतितोद्धारिणि त्रिभुवनधन्ये ॥ ५ ॥
कल्पलतामिव फलदां लोके प्रणमति यस्त्वां न पतति शोके ।
पारावारविहारिणि गङ्गे विबुधतरुणिकृततरलापाङ्गे ॥ ६ ॥
तव कृपया चेत् स्रोतस्नातः पुनरपि जठरे सोऽपि न जातः ।
नरकनिवारिणि जाह्नवि गङ्गे कलुषविनाशिनि महिमोत्तुङ्गे ॥ ७ ॥
पुण्ये धन्ये पुण्यतरङ्गे जय जय जाह्नवि करुणापाङ्गे ।
इन्द्रमुकुटमणिराजितचरणे सुखदे शुभदे सेवकशरणे ॥ ८ ॥
रोगं शोकं तापं पापं हर मे भगवति कुमतिकलापम् ।
त्रिभुवनसारे वसुधाहारे त्वमसि गुरुर्मम खलु संसारे ॥ ९ ॥
लोकानन्दे परमानन्दे कुरु मयि करुणां कातरवन्द्ये ।
तव तटनिकटे यस्य निवासः खलु वैकुण्ठे तस्य निवासः ॥ १० ॥
वरमिह नीरे कमठो मीनः किंवा तीरे शरटः क्षीणः ।
अथवा नीचः श्वपचो दीनः दूरे नृपतिस्तव न कुलीनः ॥ ११ ॥

श्रीभुवनेश्वरि पुण्ये धन्ये देवि द्रवमयि मुनिवरकन्ये ।
गङ्गास्तवमिदममलं नित्यं पठति नरो यः स जयति सत्यम् ॥ १२॥
येषां हृदये गङ्गाभक्तिस्तेषां भवति सदा सुखमुक्तिः ।
मधुरमनोहरपज्झटिकाभिः परमानन्दकलितललिताभिः ॥ १३ ॥
गङ्गास्तोत्रमिदं भवसारं वाञ्छितफलदं परमं सुखदम् ।
शङ्करसेवकशङ्कररचितं पठति नरो यस्तस्य भवेच्छम् ॥ १४ ॥

इति गङ्गास्तोत्रं सम्पूर्णम् ।

## अथ शिखाबन्धनमोचणनियमः ।

ब्राह्मणस्यैव गायत्र्या शिखाबन्धनमोचणे ॥ १ ॥

अथ स्नानानन्तरवस्त्रपरिधापनविधौ निषिद्धवस्त्राणि ।

अधौतं यत् पूर्व्वधौतं यद्धौतं रजकेन च ।
सूच्या विद्धं तथा दग्धं पञ्च वासांसि वर्ज्जयेत् ॥ १ ॥

## चन्दनादिना तिलकग्रहणम् ।

चन्दनञ्च महापुण्यं पवित्रं पापनाशनम् ।
आपदं हरते दत्ते लक्ष्मीञ्च सुखसम्पदः ॥ १ ॥

वर्णभेदे तिलकनियमः ।

ऊर्द्ध्वपुण्ड्रं द्विजः कुर्य्यात् क्षत्रियस्तु त्रिपुण्ड्रकम् ।
अर्द्धचन्द्राकृतिं वैश्यो वर्त्तुलं शूद्र एव तु ॥ १ ॥

## अथ अशक्तावस्थायां सन्ध्यावन्दनादिनियमः ।

सूतके मृतके चैव रोगापत्तौ तथाध्वनि ।
मनसापि जपेत्सन्ध्यां कुशवारि विवर्ज्जयेत् ॥ १ ॥

## पवित्राभावे कर्म्मनिषेधः ।

नित्ये नैमित्तिके काम्ये दैवे पैत्रे च कर्म्मणि ।
न शून्यन्तु करं कुर्य्यात् सुवर्णै रजतैः कुशैः ॥ १ ॥

इति याज्ञवल्क्यः ।

## अथ यज्ञोपवीतलक्षणम् ।

ॐकारः प्रथमे पादे द्वितीयेऽग्निः प्रकीर्त्तितः ।
तृतीये तक्षकश्चैव चतुर्थे सोम एव च ॥ १ ॥
पञ्चमे पितृदेवस्तु षष्ठे चैव प्रजापतिः ।
सप्तमे वासुदेवः स्यादष्टमे रविरेव च ।
नवमे सर्व्वदेवस्तु इत्येवं नवसूत्रकम् ॥ २ ॥
ब्रह्मणोत्पादितं सूत्रं विष्णुना त्रिगुणीकृतम् ।
तद्ग्रन्थितं त्रिनेत्रेण गायत्र्या चाभिमन्त्रितम् ॥ ३ ॥
निष्फलं वहति भारं यो न जानाति लक्षणम् ।
कर्म्मवाह्यो द्विजो नूनमपूज्यो लोकनिन्दितः ॥ ४ ॥

### अथ यज्ञोपवीतमन्त्रः ।

ॐ यज्ञोपवीतमन्त्रस्य गौतमात्रेयभरद्वाजा ऋषयः ऋग्यजुः-सामाथर्व्वाणि छन्दांसि ब्रह्मा विष्णुर्महेश्वरो देवताः मम नित्य-नैमित्तिककाम्यकर्म्म कर्त्तुं यज्ञोपवीतग्रहणे विनियोगः। ॐ यज्ञोपवीतम् अङ्गुष्ठाभ्यां नमः । परमं पवित्रं तर्ज्जनीभ्यां स्वाहा । वृहस्पतेर्यत्सहजं मध्यमाभ्यां वषट् । पुरस्तात् आयुष्यमग्र्यम् अनामिकाभ्यां हूं । प्रतिमुञ्च शुभ्रं कनिष्ठाभ्यां वौषट् । यज्ञोप-वीतं बलमस्तु तेजः करतलकरपृष्ठाभ्यां फट् । एवमङ्गन्यासः । अस्त्राय फड़िति शेषः ।

## ध्यानम् ।

ॐ ध्येयः सदा सवितृमण्डलमध्यवर्त्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान्मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥ १ ॥

## मन्त्रः ।

ॐ यज्ञोपवीतं परमं पवित्रं बृहस्पतेर्यत्सहजं पुरस्तात् ।
आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ १ ॥

इति त्रिवारं पठेत् । पुनर्गायत्रीं त्रिवारं पठेत् ।

ॐ यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती ।
यशो भगश्च मा विदध्व सोमा प्रतिपद्यताम् ॥ २ ॥

इति मन्त्रमेकवारं पठेत् ।

ॐ यस्त्वे प्राणः पशुषु प्रविष्टो देवानाविष्टा मुनयो वितस्थे ।
आत्मन्वान् सोम घृतवाहिसूं गच्छ स्वर्यजमानाय विन्द ॥१॥

इत्येकवारं पठित्वा ततो यज्ञोपवीतं धारयेत् ।

## अथ पुरातनयज्ञोपवीतविसर्ज्जनमन्त्रः ।

पवित्रमन्तं यदि जीर्णवन्तं वेदान्तवेद्यं पुरुषं प्रधानम् ।
आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतन्तु विसर्ज्जनीयम् ॥१॥

---

# अथ यजुर्व्वेदीयसन्ध्यापद्धतिः ।

## अथ सन्ध्याकालनियमः ।

उत्तमा तारसहिता तारलुप्ता तु मध्यमा ।
अधमा सूर्य्यसहिता प्रातःसन्ध्या त्रिधा मता ॥ १ ॥
उषा रात्रिः समाख्याता व्युष्टिरित्युच्यते दिनम् ।
प्रोच्यते च तथा सन्ध्या उषाव्युष्ट्योर्यदन्तरम् ॥ २ ॥
अहोरात्रस्य या सन्धिः सा सन्ध्या परिकीर्त्तिता ।
द्विनाड़िका भवेत्सन्ध्या यावदादित्यदर्शनम् ॥ ३ ॥
त्रयाणामिव देवानां ब्रह्मादीनां तु सङ्गमः ।
सन्धिः सर्व्वसुराणाञ्च तेन सन्ध्या प्रकीर्त्तिता ॥ ४ ॥

इति याज्ञवल्क्यः ।

## अथ सन्ध्याक्रमः ।

आदौ प्रक्षाल्य चरणावाचामेत् प्राङ्मुखो भवन् ।
उदङ्मुखो वा दैवत्ये पैतृके दक्षिणामुखः ॥ १ ॥
प्रक्षाल्य पाणिपादौ च त्रिः पिबेदम्बु वीक्षितम् ।
संवृत्याङ्गुष्ठमूलेन द्विः प्रमृज्यात्ततो मुखम् ॥ २ ॥
दक्षिणे तोयमादाय वामेन धारयेत्ततः ।
पुनर्दक्षिणहस्तेन पुनर्वामेन धारयेत् ॥ ३ ॥

## अथ इन्द्रियस्पर्शनम् ।

तिसृभिः संहताभिश्च पूर्व्वमास्यमुपस्पृशेत् ।
अङ्गुष्ठतर्ज्जनीभ्याञ्च स्पृशेच्चक्षुर्द्वयं ततः ॥ १ ॥
ताभ्यामेवाङ्गुलिभ्यान्तु श्रवणे द्वे परिस्पृशेत् ।
नाभिङ्कनिष्ठाङ्गुष्ठाभ्यां हृदयन्तु तलेन वै ॥ २ ॥

सर्व्वाभिश्च शिरः पश्चात् बाहू चाग्रेण संस्पृशेत्।
मुखं घ्राणं तथा चक्षुः श्रोत्रञ्चैव पुनः पुनः।
संस्पृशेत्पुनरात्मानं शिरो बाहू च पण्डितः॥ ३॥

इति याज्ञवल्क्यः।

गोकर्णाकृतिहस्तेन माषमग्नजलं पिबेत्।
तन्न्यूनमधिकं वापि पीतं तद्रुधिरं भवेत्॥ १॥
संहताङ्गुलिना तोयं पाणिना दक्षिणेन तु।
मुक्ताङ्गुष्ठकनिष्ठेन शेषेणाचमनं चरेत्॥ २॥
एवं कृत्वाङ्गुलिस्पर्शं प्राणदृक्श्रोत्रनाभिषु।
मूर्द्धानं चरणौ चाद्भिः सम्प्रोक्ष्याथ शुचिर्भवेत्॥ ३॥
यथाश्वमेधः क्रतुराट् सर्व्वपापापनोदनः।
तथाघमर्षणं सूक्तं सर्व्वपापप्रमर्द्दनम्॥ ४॥

[टीका—

प्रथमं प्राङ्मुखः स्थित्वा पादौ प्रक्षालयेच्छनैः।
उदङ्मुखो वा दैवत्ये पैतृके दक्षिणामुखः॥ ५॥
अर्द्धं प्रक्षालितात्पादात्पृथिव्यां यत्पतेज्जलम्।
जलं पितृमुखे दत्त्वा स्वात्मानं नरकं नयेत्॥ ६॥
पादप्रक्षालनं कुर्य्यात्पूर्व्वादुत्तरतः क्रमात्।
दक्षिणे पश्चिमे चैव ब्रह्महत्या पदे पदे॥ ७॥

इति व्यासः।

त्रिः प्राश्नीयाद्यदम्भस्तु प्रीताः स्युस्तेन देवताः।
ब्रह्मा विष्णुश्च रुद्रश्च भवतीत्यनुशुश्रुम॥ १॥
गङ्गा च यमुना चैव प्रीयते सुखमार्ज्जनात्।
अश्विनेयौ च प्रीयेते स्पृष्टे नासापुटद्वये॥ २॥

स्पृष्टे लोचनयुग्मे च प्रीयेते शशिभास्करौ।
कर्णयुग्मे तथा स्पृष्टे प्रीयेते त्वनिलानलौ॥ ३॥
नाभिस्पर्शे तथा ब्रह्मा प्रीयते हृदि केशवः।
मूर्द्ध्नि संस्पर्शनाच्चापि प्रीयते पुरुषोत्तमः।
स्कन्धयोः स्पर्शनादेव प्रीयन्ते सर्व्वदेवताः॥ ४॥ इति।]

अथ सन्ध्याप्रारम्भः।

ॐ अघमर्षणसूक्तस्य अघमर्षण ऋषिः अनुष्टुप् छन्दः भावभृतं दैवतम् अश्वमेधावभृथे विनियोगः।

[टीका—
अघमर्षणसूक्तस्य ऋषिरेवाघमर्षणः।
अनुष्टुप् चैव छन्दः स्यात् भावभृतं च दैवतम्।
अश्वमेधावभृथे च विनियोगोऽस्य कल्पितः॥ १॥
इति याज्ञवल्क्यः।]

ॐ ऋतं च सत्यं चाभीद्धात्तपसो अध्यजायत।
ततो रात्र्यजायत ततः समुद्रो अर्णवः॥
समुद्रादर्णवादधि संवत्सरो अजायत।
अहोरात्राणि विदधद्विश्वस्य मिषतो वशी।
सूर्य्याचन्द्रमसौ धाता यथापूर्व्वमकल्पयत्॥
दिवं च पृथिवीं चान्तरीक्षमथो स्वः॥

अथ अघमर्षणमाहात्म्यम्।

अकार्य्यकरणे चैव अभक्ष्यस्य च भक्षणे।
अघमर्षणसूक्तेन पीत्वाऽपः शुद्ध्यते द्विजः॥ १॥

[टीका—

अथ अघमर्षणसूक्तस्य व्याख्या।

ऋतं च सत्यं चेति परं ब्रह्मोच्यते। तथाच श्रुतिः। ऋतमेकाक्षरं ब्रह्म सत्यं ज्ञानमनन्तं ब्रह्म इति। आसीत् इत्यध्याहार्य्यम्। तदयमर्थः। ऋतं च सत्यं परब्रह्ममात्रमासीत्। एतेन महाप्रलयावस्थोपपादिता। महाप्रलयावस्थायां परं ब्रह्ममात्रमासीत् इत्यभिप्रायः। ततस्तदनन्तरं महाप्रलयावस्थायामेव रात्रजायत रात्रो समुत्पन्ना केवलमेवान्धकारमयमासीदित्यर्थः। तथाच श्रुतिः। तमोभूतमप्रज्ञातमलक्षणमिति। ततस्तदनन्तरं महाप्रलयावसाने सृष्ट्यारम्भसमये तपसः अदृष्टबलात्समुद्रः अध्यजायत। किंभूतः समुद्रः अर्णवः अर्णो जलं तदस्यास्तीति अर्णवः अस्त्यर्थे वप्रत्ययः सलोपश्च पानीययुक्तः प्रथमतः सकलजनाद्युत्पत्तिनिमित्तं जलराशिरुत्पन्न इत्यर्थः। तथाच स्मृतिः। अप एव ससर्जादाविति। किंभूतात्तपसः अभीद्धात् अभि सर्व्वतोभावेन इद्धात् लब्धवृद्धेः प्रलयसमये हि निरुद्धवृत्त्यदृष्टं भवति। ततस्तदनन्तरं समुद्रादर्णवाज्जाता स्रष्टा अजायत। किंभूतो धाता मिषतः प्रकटितवतः विश्वस्य वशी प्रभुः। महाप्रलये विलुप्तस्य जगतो निर्म्माणप्रभुरित्यर्थः। स धाता यथापूर्व्वं यथाक्रमं सूर्य्याचन्द्रमसौ अकल्पयत् निर्म्मितवानित्यर्थः। ततस्तदनन्तरं किंभूतौ सूर्य्याचन्द्रमसौ अहोरात्राणि विदधत् कुर्वाणौ। सूर्य्य एव हि दिवसं करोति चन्द्रमाश्च रात्रिं करोति। ततः सूर्य्याचन्द्रमसोरुत्पत्त्यनन्तरं संवत्सरः अजायत समुत्पन्नः। ततः सूर्य्यचन्द्रोत्पत्तौ दिनरात्रिविभागपरिकल्पनया संवत्सरसम्भवः। अथो अनन्तरं दिवं स्वर्गं पृथिवीं महीम् अन्तरीक्ष-

माकाशं स्वः नक्षत्रलोकोपरिस्थितं स्वर्गलोकं स एव धाता अकल्पयत् चराचरात्मकं सकललोकं सृष्टवान्। इति व्यासः।]

अथ मार्ज्जनविधिः।

द्विराचम्य गायत्रीं त्रिः पठित्वा कुशत्रयेण शिरसि मार्ज्जनं कुर्य्यात्। ततः आपो हि ष्ठेति मन्त्रस्य सिन्धुद्वीप ऋषिः गायत्री च्छन्दः आपो देवता मार्ज्जने विनियोगः। ॐ आपो हि ष्ठा मयोभुव इति आकाशे। ॐ ता न ऊर्जे दधातन इति भूमौ। ॐ महेरणाय चक्षसे इति मूर्द्ध्नि। ॐ यो वः शिवतमो रस इति मूर्द्ध्नि। ॐ तस्य भाजयतेह न इति भूमौ। ॐ उषतीरिव मातर इति आकाशे। ॐ तस्मा अरङ्गमाम व इति मूर्द्ध्नि। ॐ यस्य क्षयाय जिन्वथ इति आकाशे। ॐ आपो जनयथा च न इति भूमौ।

तद्यथा—वरथत्रयक्षरं व्योम्नि सेसवो मूर्द्ध्नि वर्त्तते।

नकारत्रयक्षरं भूमौ नवधा मार्ज्जनं स्मृतम्॥ १॥

आकाशे देवगन्धर्व्वा भूमौ सर्व्वे च जन्तवः।

आत्मनः पातकं सर्व्वं विनिघ्नन्ति यथाक्रमम्॥ २॥

आपो हि ष्ठा त्रिभिः कुर्य्यात् मार्जनञ्च कुशोदकैः।

प्रणवेन तु संयुक्तः क्षिपेद्वारि पदे पदे॥ ३॥

[टीका—

सिन्धुद्वीप ऋषिश्छन्दो गायत्र्यापश्च देवताः।

मार्ज्जने विनियोगश्च अङ्गस्यैव प्रकीर्त्तिताः॥ १॥

आपो हि ष्ठेति। हे आपः हि यस्मात् यूयं मयोभुवः मयः सुखं तस्य भावयित्र्यो भवथ तस्मान्नोऽस्मान् ऊर्जे अन्नाय तेजसे दधातन स्थापयत। महे महते रणाय रमणीयाय चक्षसे दर्श-

नीयाय दधातन। अयमर्थः। हे आपः हि यस्माद्यूयं सुख
प्रापयथ तस्मान्नोऽस्मान् ऐहिकेन अन्नाद्युद्भवेन आकस्मिकेन
अकस्मादुत्पन्नेन महेरणाय महारमणीयायाभिधानेनैव परम-
ब्रह्मणा संयोजयत इत्यप्सु प्रार्थना। यो व इति। हे आपः
वो युष्माकं यो रसो निर्यासः शिवतमः अत्यन्तकल्याणकररूपः
तस्य रसस्य इह नः अस्मान् भाजयत भागिनः कुरुत तेन रसेन
अस्मान्सम्बन्धिनः कुरुत। किंभूता यूयम् उषतीः इच्छावत्यः
स्नेहला मातर इव। अयमर्थः। यथा सस्नेहा मातरः पुत्रान्
स्तन्यरसभागिनः कुर्व्वन्ति तथा यूयमपि अस्मान् कल्याणकारि-
रसयुक्तान् कुरुत इत्यप्सु प्रार्थना। तस्मा अरमिति। हे आपः
वो युष्माकं तस्मै तस्मिन् रसे अरम् अलं पर्य्याप्तं गमाम गच्छाम
तस्मिन् रसे तृप्तिङ्गच्छाम इत्यर्थः। किञ्च तत्र रसे नोऽस्मान्
जनयथा च तत्र रसे भोक्तृत्वेनास्मान् परिकल्पयथ। यस्य रसस्य
क्षयाय क्षयस्थाने जिन्वथ प्रीणयथ ब्रह्मादिस्तम्बपर्य्यन्तं जगदिति
शेषः। अयमर्थः। हे आपः युष्माकं रसस्य स्थाने जगद्यूयं
प्रीणयथ तस्य विषये वयं तृप्तिङ्गच्छाम यूयञ्च नस्तत्र सम्भो-
गान् जनयथ।

रजसस्तमसो मोहात् जाग्रत्स्वप्नसुषुप्तिजान्।
वाङ्मनःकायकर्म्मोत्थान्नवैतान्नवभिर्दहेत्॥

इति व्यासः।

ॐ शन्न आप इति मन्त्रस्य प्रजापति ऋषिः अनुष्टुप् छन्दः आपो देवता अपाम्मार्ज्जने विनियोगः।

ॐ शन्न आपो धन्वन्याः शमुनः सन्त्वनूप्याः।
शन्नः समुद्रिया आपः शमुनः सन्तु कूप्याः॥ १॥

ॐ द्रुपदादिव इति मन्त्रस्य कोकिलराजपुत्त्र ऋषिः अनुष्टुप् छन्दः आपो देवता सौत्रामण्यवभृथे विनियोगः।

ॐ द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव।
पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः॥ १॥

इति याज्ञवल्क्यः।

द्रुपदा नाम सा देवी यजुर्व्वेदप्रतिष्ठिता।
अन्तर्ज्जले त्रिरावृत्त्य मुच्यते ब्रह्महत्यया॥

इति पराशरः।

आपत्काले तु विप्रेण भुक्तं शूद्रगृहे यदि।
मनस्तापेन शुध्येत द्रुपदां वा शतं जपेत्॥ १॥
पुण्या अपः समादाय त्रिः पठेद्द्रुपदादिवम्।
तत्तोयं मूर्द्ध्नि विन्यस्य सर्व्वपापैः प्रमुच्यते।
ऋतं चेतीह कर्त्तव्यं मार्ज्जनं चात्र कल्पितम्॥ २॥

[टीका—

शन्न इति। धन्वन्या आपः मरुदेशोद्भवानि जलानि नोऽस्माकं शं कल्याणं कुर्व्वन्तु इति शेषः। तथा अनूप्याः अनूपदेशप्रभवा आपः शमुनः सन्तु कल्याणदायिन्यो भवन्तु इत्यर्थः। तथा समुद्रिया आपः समुद्रभवा आपः नोऽस्माकं शं कल्याणं कुर्व्वन्तु। तथा कूप्याः कूपोद्भवा आपः शमुनः सन्तु।

इति याज्ञवल्क्यः।

कोकिलो राजपुत्त्रश्च द्रुपदाया ऋषिः स्मृतः।
अनुष्टुप् च भवेच्छन्दः आपश्चैव तु देवताः।
सौत्रामण्यवभृथके विनियोगः प्रकीर्त्तितः॥ १॥

द्रुपदादिवेति। आपः जलानि मा एनसः पापात् शुन्धन्तु

पवित्रयन्तु । अत्र दृष्टान्तमाह । द्रुपदादिव मुमुचानः यथा द्रुपदाद्वृक्षमूलाद्वृक्षमूलं प्राप्य स्विन्नः घर्म्मार्त्तो मुमुचानो मुक्तो भवति यथा वा स्नातः कृतस्नानो मलात्क्लेदादेर्मुक्तो भवति यथा च आज्यं घृतं पवित्रेण आज्यसंस्कारविधिना पूतं भवति तथा मामप्यापः पावयन्त्विति आशंसा वाक्यार्थः ।]

ततो रक्षार्थं ॐ ब्रह्मणे नमः इति वारिणा आत्मानं वारत्रयं वेष्टयित्वा प्राणायामं कुर्य्यादिति गौड़ाः ।

अथ आसनशुद्धिः ।

ॐ आसनमन्त्रस्य मेरुपृष्ठ ऋषिः सुतलं छन्दः श्रीकूर्मो देवता पृथ्वी वीजम् आकाशः शक्तिः अन्तरीक्षं कीलकम् आसनशुद्धौ विनियोगः ।

आत्मासने ॐ कमलासनाय नमः ।

आत्मासनपदं पूर्व्वं कमलाय नमः-पदम् ।
इमं मन्त्रं समुच्चार्य्य स्वासनं पूजयेद्बुधः ॥ १ ॥
ॐ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।
त्वञ्च धारय मां नित्यं पवित्रमासनं कुरु ॥ २ ॥

अथ प्राणायामविधिः ।

ओङ्कारस्य ब्रह्मा ऋषिः दैवी गायत्री च्छन्दः अग्निर्दैवता सर्व्वकर्म्मारम्भे विनियोगः ॥ १ ॥ ॐ सप्तव्याहृतीनां यमदग्निभरद्वाजभृगुगौतमकश्यपविश्वामित्रवशिष्ठा ऋषयः गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगत्यश्छन्दांसि अग्निवायुसूर्य्यबृहस्पतिवरुणेन्द्रविश्वेदेवा देवताः प्राणायामे विनियोगः ॥ २ ॥ ॐ गायत्र्या विश्वामित्र ऋषिः गायत्री च्छन्दः सविता देवता णी वीजं यं शक्तिः प्राणायामे विनियोगः ॥ ३ ॥ ॐ शिरसः प्रजा-

पतिर्ऋषिः अनुष्टुप् छन्दः ब्रह्माग्निवायुसूर्य्या देवताः प्राणायामे विनियोगः ॥ ४ ॥

[टीका—

प्रणवस्य ऋषिर्ब्रह्मा देवोऽग्निस्तस्य कथ्यते।
गायत्री च तथा छन्दो नियोगः सर्व्वकर्म्मसु ॥ १ ॥
यमदग्निभरद्वाजौ भृगुगौतमकश्यपान्।
विश्वामित्रवसिष्ठाख्यौ व्याहृतीनां मुनीन् विदुः ॥ २ ॥
गायत्र्युष्णिगनुष्टुप् च बृहती पंक्तिरेव च।
त्रिष्टुब्जगती च्छन्दांसि प्राणायामे नियोजयेत् ॥ ३ ॥
सप्ताक्षराणामग्निश्च वायुः सूर्य्यश्च देवता।
बृहस्पतिश्च वरुण इन्द्रश्चैव क्रमादमी ॥ ४ ॥
विश्वेदेवाश्चैव तथा ह्यक्षराणां तथा स्मृताः।
विश्वामित्र ऋषिः सूर्य्यो देवताग्निमुखं तथा ॥ ५ ॥
छन्दस्तथा तु गायत्री प्राणायामे नियोजनम्।
ॐ आपो ज्योतिरित्यादिर्मन्त्रोऽयं तत्र कथ्यते ॥ ६ ॥
तस्य प्रजापतिश्चर्षिः शिरसः छन्दोऽनुष्टुप्।
ब्रह्माग्निवायुसूर्य्याश्च देवताः समुदाहृताः।
प्राणस्यायामने चैव विनियोग उदाहृतः ॥ ७ ॥]

अथ करन्यासः।

ॐ भूः ॐ भुवः ॐ स्वः अङ्गुष्ठाभ्यां नमः। ॐ महः ॐ जनः ॐ तपः ॐ सत्यं तर्ज्जनीभ्यां स्वाहा। ॐ तत्सवितुर्वरेण्यं मध्यमाभ्यां वषट्। ॐ भर्गो देवस्य धीमहि अनामिकाभ्यां हुम्। ॐ धियो यो नः प्रचोदयात् कनिष्ठाभ्यां वौषट्। ॐ

आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोङ्करतलकरपृष्ठाभ्यां फट् ।

एवं क्रमेण हृदयादिषु न्यसेत् । तालत्रयेण दिग्बन्धनं कुर्य्यात् ।

अधोमध्योर्द्ध्वदेशे तु कुर्य्यात्तालत्रयं ततः ।
हस्तशुद्धिरियं प्रोक्ता सर्व्वत्रार्च्चनकर्म्मणि ॥ १ ॥
अङ्गुलीत्रयमाकुञ्च्य तर्ज्जन्यङ्गुष्ठशब्दितः ।
चतुर्दिक्षु शिरोऽभ्यासे विन्यसेदस्त्रमन्त्रकम् ॥ २ ॥

ॐ इन्द्राय नमः । ॐ अग्नये नमः । ॐ यमाय नमः । ॐ नैर्ऋताय नमः । ॐ वरुणाय नमः । ॐ वायवे नमः । ॐ कुवेराय नमः । ॐ ईशानाय नमः । ऊर्द्ध्वे ॐ ब्रह्मणे नमः । अधः ॐ अनन्ताय नमः ।

अकारं विन्यसेन्नाभौ सत्त्वरूपं निरञ्जनम् ।
उकारं हृदये तद्वद्राजसं तद्गतं स्मृतम् ॥ १ ॥
मकारं मूर्द्ध्नि विन्यस्य तामसं तत्तुरीयकम् ।
ब्रह्माणञ्च सदात्मानं ध्यायेद्विगतकल्मषः ॥ २ ॥
भूर्लोकं पादयोर्न्यस्य भुवर्लोकन्तु जानुनि ।
स्वर्लोकं कटिदेशे तु नाभिदेशे महस्तथा ॥ ३ ॥
जनलोकन्तु हृदये कण्ठदेशे तपस्तथा ।
भ्रुवोर्ल्ललाटमध्ये तु सत्यलोकं प्रतिष्ठितम् ॥ ४ ॥

ॐ भूः पादयोः । ॐ भुवः जान्वोः । ॐ स्वः कट्याम् । ॐ महः नाभौ । ॐ जनः हृदये । ॐ तपः कण्ठे । ॐ सत्यं भ्रुवोर्ल्ललाटे ।

तत्कारं विन्यसेत्प्राज्ञः पादाङ्गुष्ठद्वये द्विजः ।
सकारं गुल्फदेशे तु विकारं जङ्घयोस्तथा ॥ १ ॥

तुःकारं जानुदेशे तु वकारमूरुदेशके ।
रेकारं गुह्यदेशे तु णीकारं वृषणे तथा ॥ २ ॥
यङ्कारं कटिदेशे तु भकारं नाभिमध्यगे ।
गोंकारञ्च न्यसेत्कुक्षौ देकारं स्तनयोस्तथा ॥ ३ ॥
वकारं हृदये चैव स्यकारं कण्ठदेशके ।
धीकारं वदने चापि मकारं तालुके तथा ॥ ४ ॥
हिकारं कर्णयोश्चापि धिकारं नयनद्वये ।
योकारञ्च भ्रुवोर्मध्ये योकारन्तु ललाटके ॥ ५ ॥
पूर्व्वानने नःकारञ्च प्रकारं दक्षिणानने ।
पश्चिमास्ये च चोकारं दकारमुत्तरानने ॥ ६ ॥
विन्यसेन्मूर्द्ध्नि यात्कारं ततो ध्यानं समाचरेत् ।
एवं यो विन्यसेद्विप्रः परब्रह्म स उच्यते ॥ ७ ॥
नाभौ विष्णुं चतुर्बाहुं श्यामं हृदि चतुर्मुखम् ।
अब्जस्थं रक्तगौराङ्गं ललाटे शुभ्रमीश्वरम् ॥ ८ ॥
गुह्ये चक्षुषि वक्त्रे च मस्तके हृदये तथा ।
पादे नाभौ ललाटे च नवमं मूर्द्ध्नि विन्यसेत् ॥ ९ ॥

ॐ आपः नमः गुह्ये । ॐ ज्योतिर्नमश्चक्षुषोः । ॐ रसः नमः वक्त्रे । ॐ अमृतं नमः मस्तके । ॐ ब्रह्म नमः हृदये । ॐ भूर्नमः पादयोः । ॐ भुवः नमः नाभौ । ॐ स्वः नमः ललाटे । ॐ ॐ नमः मूर्द्ध्नि ।

ततः करकच्छपिकामुद्रया विष्णुब्रह्ममहेश्वरान्ध्यायेत् ।

नीलोत्पलदलश्यामं नाभिमध्ये प्रतिष्ठितम् ।
चतुर्भुजं महात्मानं पूरके तु विचिन्तयेत् ॥ १ ॥

इति पूरके ।

कुम्भके तु हृदि स्थाने ध्यायेच्च कमलासनम् ।
ब्रह्माणं रक्तगौराङ्गं चतुर्वक्त्रं पितामहम् ॥ २ ॥

इति कुम्भके ।

रेचके चेश्वरं विन्द्याल्ललाटस्थं त्रिलोचनम् ।
शुद्धस्फटिकसङ्काशं निर्म्मलं पापनाशनम् ॥ ३ ॥

इति रेचके ।

उक्तञ्च—नीलोत्पलप्रभं विष्णुं ध्यायेद्रक्तं प्रजापतिम् ।
शङ्करं त्र्यम्बकं श्वेतं ध्यायेन्मुच्येत बन्धनात् ॥ १ ॥

पूरक-कुम्भक-रेचक-लक्षणानि ।

नासापुटेनाथ्यवहिःस्थितञ्च आकृष्य तेनैव शनैः समीरम् ।
नाड्यश्च सर्व्वाः परिपूरयेद्यः स पूरको नाम महानिरोधः ॥ १ ॥
न रेचको नैव च पूरयोगी नासाग्रवर्त्तिस्थित एव वायुः ।
सुनिश्चलं धारयतः क्रमेण कुम्भाख्यमेतं प्रवदन्ति तज्ज्ञाः ॥ २ ॥
विकृष्य नासाविवरेऽवशेषं प्राणं वहिःशून्यमिवानिलेन ।
निरुध्य सन्तिष्ठति चोर्द्ध्ववायुः स रेचको नाम महानिरोधः ॥ ३ ॥
एवं कृते ह्येकः प्राणायामो भवति ।

सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥ १ ॥
प्राणायामाः ब्राह्मणस्य त्रयोऽपि विधिवत्कृताः ।
व्याहृतिप्रणवैर्युक्ता विज्ञेयं परमं तपः ॥ २ ॥
पूरकः कुम्भको रेचः प्राणायामस्त्रिलक्षणः ।
प्राणायामजपं कुर्य्यात् मध्यमां तर्ज्जनीं विना ॥ ३ ॥
विष्णुस्तु पूरको ज्ञेयः ब्रह्मा च कुम्भकस्तथा ।
रेचकः शङ्करश्चैव चराचरमतः परम् ॥ ४ ॥

## अथ प्राणायामविधिः।

प्रथमम्—नाभौ नीलोत्पलदलप्रभं चतुर्भुजं शङ्खचक्रगदापद्म-हस्तं गरुड़ारूढ़ं केशवं ध्यायता अङ्गुष्ठाग्रपर्व्वणा दक्षिणनासापुटं निरुद्ध्य पूरकेण श्वासं वामनासापुटेन प्रवेशयता प्राणायाममन्त्र-स्त्रिवारं पठनीयः।

द्वितीयम्—हृदि रक्तवर्णं चतुर्मुखं द्विभुजमक्षसूत्रकमण्डलु-करं हंसवाहनस्थं ब्रह्माणं ध्यायता कनिष्ठानामिकाङ्गुष्ठैर्नासापुट-द्वयं निरुद्ध्य कुम्भकेण श्वासं हृदि स्तम्भयता प्राणायाममन्त्र-स्त्रिवारं पठनीयः।

तृतीयम्—पुनर्ललाटे त्रिशूलडमरुकरं मध्ये चन्द्रविभूषितं त्रिनेत्रं वृषभस्थं ध्यायता रेचकेण दक्षिणनासापुटेन श्वासं वहि-र्निस्सारयता प्राणायाममन्त्रस्त्रिवारं पठनीयः।

### अथ प्राणायाममन्त्रः।

ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॐ आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम् हं सः सोऽहम्।

निरोधाज्जायते वायुर्वायोरग्निश्च जायते।
अग्नेरापः प्रजायन्ते ततोऽन्तः शुद्ध्यते त्रिभिः॥ १॥
यथा पर्व्वतधातूनां दोषान्दहति पावकः।
एवमन्तर्गतं पापं प्राणायामेन दह्यते॥ २॥
ईड़ा वामे स्थिता मार्गे पिङ्गला दक्षिणे स्थिता।
सुषुम्ना मध्यदेशस्था ब्रह्ममार्गेण संस्थिता॥ ३॥
मनोवाक्कायजान्दोषान् प्राणायामैर्दहेद्द्विजः।
तस्मात्सर्व्वेषु कालेषु प्राणायामपरो भवेत्॥ ४॥

न चञ्चलो न च हसन् न पार्श्वमवलोकयन् ।
न कम्पयन् शिरोग्रीवं दन्तान्नैव प्रकाशयन् ।
प्राणायामजपं कुर्य्यात् जिह्वोष्ठं नैव चालयेत् ॥ ५ ॥
प्राणायामत्रयङ्कृत्वा कल्यमुत्थाय वै द्विजः ।
अहोरात्रकृतात्पापात्तत्क्षणादेव शुद्ध्यति ॥ ६ ॥
एषा व्याहृती गायत्री अनेन शिरसा सह ।
अन्तःकरणशुद्ध्यर्थं प्राणायामान् समाचरेत् ॥ ७ ॥
गायत्री तु चतुर्व्विंशा तथारूढ़ा चतुर्द्दशा ।
द्वादश स्युर्व्याहृतयः प्रयोज्याः प्रणवा दश ॥ ८ ॥
एता एतां सहानेन तथैभिर्दशभिस्सह ।
त्रिर्जपेदायतप्राणः प्राणायामः स उच्यते ॥ ९ ॥

एताः सप्त व्याहृतयः एतां गायत्रीम् अनेन शिरसा एभिः प्रणवैर्दशभिः ।

प्राणायामः परं ब्रह्म प्राणायामः परः शिवः ।
प्राणायामः परो विष्णुः प्राणायामः परो विधिः ॥ १० ॥

अथ प्रातराचमनमन्त्रः ।

ॐ सूर्य्यश्च मेति मन्त्रस्य ब्रह्मा ऋषिः पङ्क्तिच्छन्दः श्रीसूर्य्यो देवता आचमने विनियोगः ।

ॐ सूर्य्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम् । यद्रात्र्या पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्या-मुदरेण शिश्ना अहस्तदवलुम्पतु यत्किञ्चिद्दुरितं मयि इदमहं-मापोऽमृतयोनौ सूर्य्ये ज्योतिषि परमात्मनि जुहोमि स्वाहा ।

इत्याचमनं पूर्व्वाह्णे कुर्य्यात् ।

[टीका—

सूर्य्यश्च मेति । मां रक्षन्तां पालयन्तु मन्युः यज्ञः क्रोधो वाक्ये सूर्य्यः मन्युपतयः क्रोधपतयः इन्द्रियाणि यज्ञपतयः यज्ञेश्वराः एते सर्व्वे मामवन्तु केभ्यः पापेभ्यः किम्भूतेभ्यः मन्युकृतेभ्यः क्रोधकृतेभ्यः आसङ्गयज्ञकृतेभ्यो वा यत्पापमहमकार्षं कृतवान् रात्र्या कारणभूतया केन मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना शिश्नेन तत्पापम् अहर्दिवसस्तदवलुम्पतु खण्डयतु नाशयतु यत्किञ्चिन्मयि यदाश्रितं दुरितं पापं तदिदमहं सूर्य्ये जुहोमि किम्भूते सूर्य्ये ज्योतिषि हृत्पद्ममध्ये स्थिते प्रकाशस्वरूपे परमात्मनि परमात्मस्वरूपे अमृतयोनौ चेतनाधिकरणे पानीयस्वरूपेण एतत्पापं जुहोमि स्वाहा आहुतं भवतु ।]

अथ मध्याह्नाचमनमन्त्रः ।

ॐ आपः पुनन्त्विति मन्त्रस्य विष्णुर्ऋषिः अनुष्टुप् छन्दः आपो देवता आचमने विनियोगः ।

ॐ आपः पुनन्तु पृथिवीं पृथ्वी पूता पुनातु माम् ।
पुनन्तु ब्रह्मणस्पतिं ब्रह्म पूता पुनातु माम् ॥
यदुच्छिष्टमभोज्यञ्च यद्वा दुश्चरितं मम ।
सर्व्वं पुनन्तु मामापो असताञ्च प्रतिग्रहꣳ स्वाहा ॥

[टीका—

आपः पुनन्तु इति । आपः पृथिवीं पुनन्तु पवित्रां कुर्व्वन्तु सा पृथिवी अद्भिः पूता सती मां क्षेत्रज्ञं जीवात्मानं पुनातु । न केवलम् आपः पृथिवीं पुनन्तु अपि तु ब्रह्मणः ज्ञानस्य पतिम् आश्रयम् आश्रयभूतं परमात्मानमपि पुनन्तु । तद्ब्रह्म परमात्मा पूता पूतं सन्मां पुनातु । यदुच्छिष्टम् अपावनम् अहितं भोज्यं

गर्हितभोजनं यद्वा यदपि दुश्चरितम् असदाचरणम् असताम् अप्रतिग्राह्याणां प्रतिग्रहश्च तत्सर्व्वंपापमध्वस्थं माम् आपः पुनन्तु । इयमाशास्य या आपः आचम्यन्ते ताभ्यः स्वाहा । आप आचमनेन मदीयदेहपावनपूर्व्वकमुच्छिष्टादिरूपपापेभ्यः मां पावयन्तु इत्याशंसा वाक्यार्थः ।]

अथ सायाह्नाचमनमन्त्रः ।

अग्निश्च मेति मन्त्रस्य रुद्र ऋषिः त्रिष्टुप् छन्दः अग्निर्देवता आचमने विनियोगः ।

ॐ अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम् । यदह्ना पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना रात्रिस्तदवलुम्पतु यत्किञ्चिद्दुरितं मयि इदमहमापोऽमृतयोनौ सत्ये ज्योतिषि परमात्मनि जुहोमि स्वाहा ।

[टीका—

अग्निश्च मेति । अह्ना दिवसेन यत्पापमकार्षं तत् रात्रिः अवलुम्पतु । अहम् इदं जलं ज्योतिषि सत्ये सत्यस्वरूपे परमात्मनि जुहोमि स्वाहा ।]

ततः पूर्व्ववदापो हि ष्ठेति मार्ज्जनं कृत्वा जलगण्डूषं नासिकया स्पृष्ट्वा वारत्रयं सकृद्वा क्षिपेत् ।

जलपूर्णं पुनर्हस्तं नासिकाग्रे समर्पयेत् ।
ॐ ऋतञ्चेति पठित्वा तु तज्जलं प्रक्षिपेदधः ॥ १ ॥

ततः प्रणवव्याहृतीसहितां गायत्रीं पठित्वा श्रीसूर्य्याय नमः इत्युदकाञ्जलित्रयं प्रक्षिपेत् ।

सन्ध्याकाले तु सम्प्राप्ते रौद्रे परमदारुणे ।
त्रिंशत्कोट्यो महावीर्य्या मन्देहा नाम राक्षसाः ।

घृतघ्ना दारुणाचाराः सूर्य्यमिच्छन्ति खादितुम् ॥ १ ॥
ततः सूर्य्यस्य तैर्युद्धं भवत्यत्यन्तदारुणम् ।
उदयास्तमने काले प्रत्यहं नात्र संशयः ॥ २ ॥
ॐकारब्रह्मसंयुक्तं गायत्र्या चाभिमन्त्रितम् ।
आदित्याभिमुखं तिष्ठंस्त्रिः क्षिपेत्सन्ध्ययोर्द्वयोः ॥ ३ ॥
ततो देवगणाः सर्व्वे ऋषयश्च तपोधनाः ।
सन्ध्यामुपास्य विधिवत्प्रक्षिपन्ति जलाञ्जलिम् ॥ ४ ॥
ब्रह्मणोपासिता सन्ध्या विष्णुना शङ्करेण च ।
शक्राद्यैर्लोकपालैश्च शुक्राद्यैः सुरसत्तमैः ॥ ५ ॥

[टीका—

ऋषिभिर्बालखिल्यैश्च ब्राह्मणैर्मुनिपुङ्गवैः ।
कस्तां नोपासयेद्देवीं सिद्धिकामो द्विजोत्तमः ॥ ६ ॥
करोत्तानकृतः प्रातः सायञ्चाधोमुखौ करौ ।
मध्याह्ने ऊर्द्ध्वबाहुभ्यां शुभ्रकच्चः सदा भवेत् ॥ ७ ॥]

अथ सूर्य्योपस्थानमन्त्रः ।

ॐ उदु त्यमिति मन्त्रस्य प्रस्कन्द ऋषिः गायत्री च्छन्दः श्रीसूर्य्यो देवता श्रीसूर्य्योपस्थाने विनियोगः ।

ॐ उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्य्यम् ॥ १ ॥

[टीका—

सायम्प्रातरुपस्थानं कुर्य्यात् प्राञ्जलिभावतः ।
ऊर्द्ध्वबाहुस्तु मध्याह्ने तथादित्यस्य दर्शनम् ॥ १ ॥
उदु त्यं चित्रं तच्चक्षुरित्युपस्थाय भास्करम् ।
वाङ्मनःकर्म्मजं पापं सर्व्वस्त्वेव व्यपोहति ॥ २ ॥

उदु त्यमिति। उदु त्यं तं सूर्य्यं देवं केतवः रश्मयः ऊर्द्ध्वं वहन्ति। किम्भूतं जातवेदसम् अग्नितेजोमयमित्यर्थः। किमर्थमुद्वहन्ति विश्वाय दृशे दर्शनाय। अयमर्थः—तेजःस्वरूपं सूर्य्यं विश्वस्य प्रकाशनाय उद्वहन्ति रश्मयः।]

ॐ चित्रं देवानामिति मन्त्रस्य कौत्स ऋषिः त्रिष्टुप् छन्दः श्रीसूर्य्यो देवता श्रीसूर्य्योपस्थाने विनियोगः।

ॐ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः।
आप्रा द्यावापृथिवी अन्तरीक्षं सूर्य्य आत्मा जगतस्तस्थुषश्च॥२॥

[टीका—

चित्रमिति। असौ सूर्य्यः उदगात् उदितोऽभवत्। कीदृशः मित्रस्य वरुणस्य अग्नेस्त्रयाणां देवानां चक्षुः। पुनः कीदृशः मित्रादिव्यतिरिक्तानाम् अन्येषां देवानामनीकं समूहः। कथमुदगात् चित्रम् आश्चर्य्यं यथा भवति। उदयानन्तरं द्यावापृथिवी अन्तरीक्षञ्च आप्रा पूरयितवान् स्वेन रश्मिजालेनेत्यर्थः। पुनः किम्भूतः जगतः जङ्गमस्य तस्थुषः स्थावरस्य आत्मा स्थावरजङ्गमरूपसकलसंसारमयः अयमेव सूर्य्य इत्यर्थः।]

ॐ तच्चक्षुरिति मन्त्रस्य वशिष्ठ ऋषिः उष्णिक् छन्दः श्रीसूर्य्यो देवता श्रीसूर्य्योपस्थाने विनियोगः।

ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् पश्येम शरदः शतं जीवेम शरदः शतं शृणुयाम शरदः शतम् ॥ ३ ॥

[टीका—

तच्चक्षुरिति। तत्पूर्व्वोक्तं चक्षुः। किम्भूतं देवहितं देवानां समाहितम्। पुनः किम्भूतं शुक्रं निर्म्मलम्। पुनः किम्भूतं पुरस्तात्प्राच्यां दिशि उच्चरत् ऊर्द्ध्वं चरत्। तदेव तस्योपस्थानं कृत्वा वयं

शरदः शतं शतवर्षाणि पश्येम तथा शरदः शतं जीवेम तथा शरदः शतं शृणुयाम ।]

अथ गायत्रीजपविधिः।

ॐ तेजोऽसीति मन्त्रस्य भृगुर्ऋषिः छन्दो नास्ति शक्रो देवता गायत्र्यावाहने विनियोगः।

ॐ तेजोऽसि सहोऽसि बलमसि भ्राजोऽसि प्रियं देवानां धामनामासि। विश्वमसि विश्वायुः सर्व्वमसि सर्व्वायुरसि भूरोम्।

ॐ आयाहि वरदे देवि त्र्यक्षरे ब्रह्मवादिनि।
गायत्रि च्छन्दसां मातर्ब्रह्मयोनि नमोऽस्तु ते ॥ १ ॥

गायत्रीमावाहयामि इत्यावाहनम्।

ॐकारस्य गायत्र्या विश्वामित्र ऋषिः गायत्रीच्छन्दः सविता देवता णो वीजं यं शक्तिः जपोपनयने विनियोगः।

अथ करन्यासः।

ॐ भूः अङ्गुष्ठाभ्यां नमः। ॐ भुवस्तर्ज्जनीभ्यां स्वाहा। ॐ स्वः मध्यमाभ्यां वषट्। ॐ तत्सवितुर्वरेण्यम् अनामिकाभ्यां हूं। ॐ भर्गो देवस्य धीमहि कनिष्ठाभ्यां वौषट्। ॐ धियो यो नः प्रचोदयात् करतलकरपृष्ठाभ्यां फट्।

एवमङ्गन्यासः। अस्त्राय फट् इति शेषः।

अथ प्रत्यक्षरन्यासः।

नाभौ अं नमः। हृदये उं नमः। मूर्ध्नि मं नमः। ॐ ॐ हृदि। ॐ भूः शिरसि। ॐ भुवः शिखायाम्। ॐ स्वः सर्व्वगात्रेषु पादाङ्गुष्ठयोः। ॐ तं नमः गुल्फयोः। ॐ त्सं नमः जङ्घयोः। ॐ विं नमः जान्वोः। ॐ तुः नमः उर्व्वोः। ॐ वं नमः गुह्ये। ॐ रें नमः वृषणे। ॐ णीं नमः कव्योः। ॐ यं नमः नाभौ।

ॐ भं नमः कुक्षौ। ॐ र्गों नमः स्तनयोः। ॐ र्दे नमः हृदि। ॐ वं नमः कण्ठे। ॐ स्यं नमः मुखे। ॐ धीं नमः नासिकायाम्। ॐ मं नमः कर्णयोः। ॐ हिं नमः नेत्रयोः। ॐ धिं नमः भ्रूमध्ये। ॐ यों नमः ललाटे। ॐ यों नमः शिरसः पूर्व्वमुखे। ॐ नः नमः शिरसः दक्षिणमुखे। ॐ प्रं नमः शिरसः पश्चिममुखे। ॐ चों नमः शिरसः उत्तरमुखे। ॐ दं नमः मूर्द्ध्नि। ॐ यात् नमः हृदये।

अथ ध्यानम्।

बालां विद्यान्तु गायत्रीं लोहितां चतुराननाम्।
रक्ताम्बरद्वयोपेतामक्षसूत्रकरां तथा॥ १॥
कमण्डलुधरां देवीं हंसवाहनसंस्थिताम्।
ब्रह्माणीं ब्रह्मदैवत्यां ब्रह्मलोकनिवासिनीम्।
मन्त्रेणावाहयेद्देवीमायान्तीं सूर्य्यमण्डलात्॥ २॥

[टीका—

प्रातःकाले तु गायत्री रविमण्डलमध्यगा।
द्विभुजा रक्तवर्णा च राजहंसोपरि स्थिता।
कुमारी ब्रह्मदैवत्या ऋग्वेदे समुदाहृता॥ १॥
दधाना हस्तपद्माभ्यामक्षमालां कमण्डलुम्।
एवं त्रयीमयी देवी ध्येया चैसार्थिभिर्द्विजैः॥ २॥]

इति पूर्व्वाह्ने ध्यानम्॥

ध्यायेन्मध्याह्नसन्ध्यायां सावित्रीं वेदमातरम्।
युवतीं शुक्लवर्णाञ्च चारुरूपां चतुर्भुजाम्।
शुक्लाम्बरद्वयोपेतां गरुड़स्कन्धसंस्थिताम्॥ १॥

शङ्खचक्रगदापद्मधारिणीं विष्णुदेवताम् ।
विष्णुलोकनिवासान्तामायान्तीं सूर्य्यमण्डलात् ॥ २ ॥

[टीका—

मध्याह्नकाले सावित्री रविमण्डलमध्यगा ।
युवती विष्णुदैवत्या श्यामवर्णा चतुर्भुजा ॥ १ ॥
शङ्खचक्रगदापद्मधरा गरुड़वाहिनी ।
यजुर्व्वेदोदाहृता सा ध्यातव्या सर्व्वसिद्धये ॥ २ ॥]

इति मध्याह्ने ध्यानम् ॥

ध्यायेत्सायाह्नसन्ध्यायां वृद्धावस्थां सरस्वतीम् ।
कृष्णां कृष्णाम्बरधरां वृषारूढ़ां त्रिलोचनाम् ॥ १ ॥
त्रिशूलडमरुहस्तां रुद्राणीं रुद्रदैवताम् ।
कैलासनिलयां देवीमायान्तीं सूर्य्यमण्डलात् ॥ २ ॥

[टीका—

सायं सरस्वती देवी रविमण्डलवासिनी ।
वृषारूढ़ा कृष्णवर्णा कृष्णाभरणभूषिता ॥ १ ॥
करद्वयेन डमरुं त्रिशूलञ्चापि बिभ्रती ।
जरती रुद्रदैवत्या सामवेदेन संस्तुता ।
एवं वाग्देवता नित्यं ध्यातव्या ज्ञानमिच्छुभिः ॥ २ ॥]

इति सायाह्ने ध्यानम् ॥

रक्ता भवति गायत्री सावित्री श्वेतवर्णिका ।
कृष्णा सरस्वती ज्ञेया सन्ध्यात्रयमुदाहृतम् ॥ १ ॥
पूर्व्वा सन्ध्या तु गायत्री सावित्री मध्यमा स्मृता ।
या भवेत्पश्चिमा सन्ध्या सा विज्ञेया सरस्वती ॥ २ ॥
नोदकस्थो जपेद्विप्रो गायत्रीं वेदमातरम् ।

अग्निस्त्रयीमुखी यस्मात्तस्मादुत्थाय तां जपेत् ॥ ३ ॥
मनोमध्ये स्थितं मन्त्रं मन्त्रमध्ये स्थितं मनः ।
मनोमन्त्रसमायुक्तमेतच्च जपलक्षणम् ॥ ४ ॥
जपे तु त्रिपदा ज्ञेया अर्च्चने च चतुष्पदा ।
दश जप्ता तु सा देवी दिनपापप्रणाशिनी ।
शतं जप्ता तु सा देवी पातकेभ्यः समुद्धरेत् ॥ ५ ॥
ॐकारं पूर्व्वमुच्चार्य्य भूर्भुवस्तदनन्तरम् ।
स्वः गायत्री च प्रणवः जपो ह्ययमुदाहृतः ॥ ६ ॥

ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॐ ।

[टीका—

सुवर्णस्तेयकृद्विप्रो ब्रह्महा गुरुतल्पगः ।
सुरापश्च विशुध्येत लक्षजप्यो न संशयः ॥ १ ॥
दशभिर्जन्मजनितं शतेन च पुराकृतम् ।
त्रियुगन्तु सहस्रेण गायत्री हन्ति पातकम् ॥ २ ॥
तर्ज्जन्यग्रेण वा मध्ये यो जपेत्स तु पापकृत् ।
चत्वारि तस्य नश्यन्ति रूपं विद्या यशो बलम् ॥ ३ ॥
ब्रह्मचारी गृहस्थो वा शतमष्टोत्तरं जपेत् ।
यतिर्वा वानप्रस्थो वा अष्टोत्तरसहस्रकम् ॥ ४ ॥
पर्व्वस्वेव जपं कुर्य्यात् रेखायां न कदाचन ।
सावित्रीं मनसा ध्यात्वा जपं कुर्य्याद्विचक्षणः ॥ ५ ॥
जपो हि द्विगुणः प्रोक्तो वाचिको मानसो भवेत् ।
मानसो मोक्षदश्चैव वाचिको मारणः स्मृतः ॥ ६ ॥
जिह्वाजपः शतगुणं सहस्रं मानसो भवेत् ।

अङ्गुल्यग्रेण यज्जप्तं यज्जप्तं मेरुलङ्घने।
व्यग्रचित्तेन यज्जप्तं तत्सर्व्वं निष्फलं भवेत्॥ ७॥
मनसा चिन्तयेन्मन्त्रं जिह्वोष्ठं नैव चालयेत्।
न कम्पयेच्छिरोग्रीवं दन्तान्नैव प्रकाशयेत्॥ ८॥
सुवर्णं जीवपुत्रञ्च शङ्खं पद्मं मणिं तथा।
कुशग्रन्थिञ्च रुद्राक्षमक्षमाला प्रकीर्त्तिता॥ ९॥
हस्तसंख्याकृताज्जप्यात्सुवर्णैर्दशधा फलम्।
शतधा शङ्खमणिभिः स्फाटिकैस्तु सहस्रधा॥ १०॥
कुशग्रन्थ्या लक्षगुणं जपस्य च फलं भवेत्।
रुद्राक्षैरयुतं तस्मात्पद्माक्षैर्नियुतं भवेत्॥ ११॥
जीवपुत्रेण चानन्तं फलं स्यान्मन्त्रजापिनः।
अकारादिक्षकारान्ता अक्षमाला प्रकीर्त्तिता॥ १२॥
क्षान्तं मेरुमुखं तत्र कल्पयेन्मुनिसत्तमः।
अनया सर्व्वमन्त्राणां जपः सर्व्वसमृद्धिदः॥ १३॥

इति व्यासः।]

अथ गायत्र्यर्थमाह।

देवस्य सवितुर्वर्चो भर्गमन्तर्गतं विभुम्।
ब्रह्मवादिन एवाहुर्वरेण्यञ्चास्य धीमहि॥ १॥
चिन्तयामो वयं भर्गं धियो यो नः प्रचोदयात्।
धर्म्मार्थकाममोक्षेषु बुद्धिवृत्तिः पुनः पुनः॥ २॥
बुद्धेश्चोदयिता यश्च चिदात्मा पुरुषो विराट्।
वरेणीयं वरेण्यञ्च जन्मसंसारभीरुभिः॥ ३॥
आदित्यान्तर्गतं वर्चो भर्गाख्यं तन्मुमुक्षुभिः।
जन्ममृत्युविनाशाय दुःखस्य त्रितयस्य च॥ ४॥

ध्यानेन पुरुषो यश्च द्रष्टव्यः सूर्य्यमण्डले ।
यच्चार्थ्यमपि चैवायं ज्ञापयेद्देवमेव हि ॥ ५ ॥

तेन तत्सवितुः वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् इत्यर्थः । यद्वा देवस्य सवितुः भर्गरूपमन्तर्यामि ब्रह्म वरेणीयं वरेण्यं जन्ममृत्युभीरुभिः तद्विनाशाय उपासनीयम् धीमहि प्रागुक्तेन सोऽहमस्मीति । अनेन भर्गः सर्व्वान्तर्यामि सर्व्वेषां संसारिणां धियो बुद्धीः प्रचोदयात् धर्म्मार्थकाममोक्षेषु प्रेरयेदित्यर्थः ।

अनामिकाद्वयं पर्व्व कनिष्ठादिक्रमेण च ।
तर्ज्जनीमूलपर्य्यन्तं करमाला प्रकीर्त्तिता ॥ १ ॥
प्रातर्नाभौ करं कुर्य्यात् मध्याह्ने हृदि पाणिना ।
सायं नासाग्रतः कुर्य्यात् त्रिसन्ध्यं जपकर्म्मणि ॥ २ ॥
पूर्व्वा सन्ध्या सनक्षत्रा मध्या शीर्षस्थिते रवौ ।
रविनक्षत्रयोर्मध्ये सायं सन्ध्या प्रकीर्त्तिता ॥ ३ ॥

अथ जपसमर्पणम् ।

ॐ गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देवि त्वत्प्रसादात्सुरेश्वरि ॥ ४ ॥

ॐ गायत्र्यै नमः इति जपं समर्प्य कृताञ्जलिः पठेत् ।

ॐ तुरीयपदस्य मेरुपृष्ठ ऋषिः यजुः परमात्मा देवता मोक्षार्थे विनियोगः ।

ॐ गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि न हि पद्यसे नमस्ते तुरीयाय दर्शिताय पदाय रजसे सावदोम् ।

ॐ महेशवदनोत्पन्ना विष्णोर्हृदयसंस्थिता ।
ब्रह्मणा समनुज्ञाता गच्छ देवि यथेच्छया ॥

इति गायत्रीं विसर्ज्जयेत् ।

### अथ सूर्य्यार्घविधिः ।

ॐ सूर्य्याय नमः, इदं सूर्य्याय । ॐ प्रजापतये नमः, इदं प्रजापतये । ॐ अग्नये नमः, इदमग्नये ।

इति जलमध्ये अञ्जलित्रयं दद्यात् । ततोऽग्रे अष्टदलाकृतिमण्डलं लिखित्वा तत्र सूर्य्यार्घं दद्यात् ।

ॐ एहि सूर्य्य सहस्रांशो तेजोराशे जगत्पते ।
अनुकम्पय मां भक्त्या गृहाणार्घं दिवाकर ॥ १ ॥

ॐ हंसः शुचिषद्वसुरन्तरीक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥

ॐ घृणिः सूर्य्य आदित्य ॐ श्रीसूर्य्याय नमः । इति सूर्य्यार्घविधिः ।

ॐ तच्चक्षुरिति मन्त्रेण अर्घावशेषं जलं चक्षुषोर्मेलयेत् ।

### ततः सूर्य्यनमस्कारः ।

ॐ नमः सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे ।
त्रयीमयाय त्रिगुणात्मधारिणे विरञ्चिनारायणशङ्करात्मने ॥ १ ॥

ध्येयः सदा सवितृमण्डलमध्यवर्त्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान्मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥ २ ॥

ॐ नमस्ते ब्रह्मरूपाय नमस्ते विष्णुरूपिणे ।
नमस्ते रुद्ररूपाय नमस्तुभ्यं त्रिमूर्त्तये ॥ ३ ॥

[टीका—

हंस इति हन्ति सततं गच्छतीति हंसः । शुचौ अग्निमण्डले सीदतीति शुचिषत् । वसुस्तेजोरूपः । अन्तरीक्षे आकाशे सीदतीति अन्तरीक्षसत् । होता मन्त्रेण देवानामाह्वाता । अवेदिषत्

यज्ञवेद्यामध्वर्य्युरूपेण सीदतीति । अतिथिरनित्यस्थितिः नित्यं भ्रमणशीलः । दुरोणे गृहे सीदतीति गृहस्थरूपेणेति दुरोणसत् । नृषु मनुष्येषु जीवात्मतया सीदतीति नृषत् । वरेषु स्वर्गादुत्कृष्ट-स्थानेषु देवादिरूपेण सीदतीति वरसत् । ऋते सत्ये महाभूत-समूहे सीदतीति परमात्मतयेति ऋतसत् । व्योममाकाशं तत्र ज्योतिर्मण्डलतया सीदतीति व्योमसत् । अप्सु अग्निरूपेण जायत इति अब्जाः । गवि पृथिव्यामण्डजादिरूपेण जायत इति गोजाः । ऋते सत्ये सत्यकथने सति यज्ञरूपेण जायत इति ऋतजाः । अद्रौ सुवर्णादिरूपेण जायत इति अद्रिजाः । ऋतं सूक्ष्मम् । बृहद्यापि । अनेन सर्व्वात्मकतया ब्रह्मरूपेण आदित्यरूपेण स्तूयत इति ।]

योऽन्यत्र कुरुते यत्नं धर्म्मकार्य्ये द्विजोत्तमः ।
विहाय सन्ध्यां प्रणतिं स याति नरकायुतम् ॥ १ ॥

इति मनुः ।

न तिष्ठति नु यः पूर्व्वां नोपास्ते यश्च पश्चिमाम् ।
स शूद्रवद्बहिष्कार्य्यः सर्व्वस्माद्द्विजकर्म्मणः ॥ १ ॥

इति दक्षः ।

एतत्सन्ध्यात्रयं प्रोक्तं ब्राह्मण्यं यत्र चेष्टितम् ।
यस्य नास्त्यादरस्तत्र न स ब्राह्मण उच्यते ॥ १ ॥

इति यमः ।

सन्ध्यामुपासते ये च सततं संशितव्रताः ।
निर्द्धूतपातका यान्ति ब्रह्मलोकं सनातनम् ॥ १ ॥
प्रातः स्नात्वा तु यो विप्रः सन्ध्योपासनतत्परः ।
सप्तजन्मार्ज्जितं पापं त्रिभिर्वर्षैर्व्यपोहति ॥ २ ॥

विप्रो वृक्षो मूलतस्तस्य सन्ध्या वेदः शाखा धर्म्मकर्म्माणि पत्रम् ।
तस्मान्मूलं यत्नतो रक्षणीयं छिन्ने मूले नैव शाखा न पत्रम् ॥ ३ ॥

त्वमेव ब्रह्मा त्वं विष्णुस्त्वं रुद्रस्त्वं प्रजापतिः ।
त्वमेव चात्मा भगवान् चरस्य स्थावरस्य च ॥ ४ ॥

ॐ गायत्र्यै नमः । इति सन्ध्याविधिः समाप्तः ।

## अथ गायत्र्यावाहनाय चतुर्व्विंशतिमुद्राः ।

सम्मुखं सम्पुटञ्चैव विदितं विस्तृतं तथा ।
द्विमुखं त्रिमुखञ्चैव चतुःपञ्चमुखं तथा ॥ १ ॥
षड्मुखोऽधोमुखञ्चैव व्यापिमञ्जलिकं तथा ।
शकटं यमपाशञ्च ग्रन्थितञ्चोन्मुखोन्मुखम् ॥ २ ॥
द्वाभ्यां सम्मुष्टिकञ्चैव मत्स्यकूर्म्मवराहकाः ।
सिंहाक्रान्तं महाक्रान्तं मुद्गरं पल्लवं तथा ॥ ३ ॥
एता मुद्राः प्रकर्त्तव्या गायत्र्या जपकर्म्मणि ।
मुद्रा एता न जानाति गायत्री तस्य निष्फला ॥ ४ ॥

### अथ चतुर्व्विंशतिमुद्रालक्षणमाह ।

आकुञ्चिताङ्गुलिकरौ संयुतौ सम्मुखं भवेत् ।
कोषाकारं सम्पुटं स्याद्विदितं विस्तृतं भवेत् ॥ १ ॥
विस्तीर्णौ विततौ हस्तावन्योऽन्याङ्गुलिसंयुतौ ।
कनिष्ठानामिकायुक्तौ हस्तौ द्वौ द्विमुखं भवेत् ॥ २ ॥
तदेव मध्यमायुक्तं त्रिमुखं परिकीर्त्तितम् ।
तदेव तर्ज्जनीयुक्तं चतुर्मुखमुदीरितम् ॥ ३ ॥
तदेव स्यात्पञ्चमुखं मिलिताङ्गुष्ठिकां यदि ।
तदेव षड्मुखं प्रोक्तं यद्यश्लिष्टकनिष्ठकम् ॥ ४ ॥

अधोमुखयुतौ हस्तौ त्वधोमुखमुदीरितम् ।
व्यापकाञ्जलिका यस्माद्द्वावङ्गुष्ठकौ युतौ ॥ ५ ॥
अङ्गुष्ठद्वयसंयुक्तं मुष्टिद्वयमधोमुखम् ।
भवेद्यदि तदेवाहुः शकटं मुनिसत्तमाः ॥ ६ ॥
मुष्टिङ्कृत्वा करौ योज्यौ तर्ज्जन्यौ सम्प्रसार्य्य च ।
आकुञ्चिताग्रौ संयोज्य यमपाशं विदुर्बुधाः ॥ ७ ॥
अन्योऽन्यायतसंश्लिष्टदशाङ्गुलिकरावुभौ ।
अन्योऽन्यमपि बध्नीयात् ग्रथितं परिकीर्त्तितम् ॥ ८ ॥
कृत्वा करौ सम्पुटकौ पूर्व्वं वामकरं सुधीः ।
अधोमुखेन दक्षेण योजयेत्सम्मुखोन्मुखम् ॥ ९ ॥
अधःकोषाकृतिकरौ विलम्बं कोविदा विदुः ।
युतं मुष्टिद्वयञ्चैव सम्यङ्मुष्टिकमीरितम् ॥ १० ॥
अधोमुखो वामकरस्तादृशो दक्षिणः करः ।
पृष्ठदेशे समाक्रान्त्वा मत्स्यमुद्रा प्रकीर्त्तिता ॥ ११ ॥
अन्योऽन्यानामिकामध्यमन्योऽन्येनापि संस्पृशेत् ।
कनिष्ठिकायुतञ्चैव कूर्म्ममुद्रा समीरिता ॥ १२ ॥
तर्ज्जनी दक्षहस्तस्य वामाङ्गुष्ठे निवेश्य च ।
हस्तेन हस्तं बध्नीयात्कोलमुद्रा समीरिता ॥ १३ ॥
मुष्टिं कृत्वा वामहस्तं मध्यमन्तु प्रसार्य्य च ।
निवेशयेद्वामकक्षे वाराही सा समीरिता ॥ १४ ॥
प्रसारिताङ्गुलिकरौ समीपं कर्णयोर्नयेत् ।
सिंहाक्रान्तं समुदितं गायत्रीजपतत्परैः ॥ १५ ॥
दर्शयेच्छ्रोत्रयोर्मध्ये हस्तावङ्गुलिपञ्चकौ ।
महाक्रान्ता भवेन्मुद्रा गायत्रीहृदयङ्गता ॥ १६ ॥

तर्ज्जनीक्षतहस्तस्य वामे करतले न्यसेत् ।
बध्नीयाद्वामहस्तेन मुद्गरं समुदाहृतम् ॥ १७ ॥
दक्षिणेन करेणैव चलिताङ्गुलिना शिरः ।
वदनाभिमुखे चैव पल्लवं मुनिभिः स्मृतम् ॥ १८ ॥

अथ गायत्रीविसर्ज्जनमुद्रालक्षणम् ।

सुरभिं ज्ञानयोनिञ्च क्षत्रं कूर्म्मञ्च पङ्कजम् ।
लिङ्गं निर्य्यापकञ्चैव जपान्तेऽष्टौ प्रदर्शयेत् ॥ १ ॥

इति गायत्रीविसर्ज्जनमुद्रालक्षणम् ।

## अथ गायत्र्यर्थोऽत्र लिख्यते ।

यथा मन्त्रः—ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ।

अस्यार्थः । ॐ इति ॐकारगम्यं **भूर्भुवः स्वः** इति भूर्भुवःस्वर्जनकं **तत्** इति विराट् पुरुषः ईश्वरः स **सवितुर्देवस्य वरेण्यं भर्गः** श्रेष्ठतरप्रकाशः तेजोरूपः **यः नः** अस्माकं **धियः** बुद्धीः **प्रचोदयात्** धर्म्मार्थकाममोक्षेषु बुद्धेः प्रेरकः सोऽहं जीवः इति लक्ष्यः **धीमहि** इति ध्यायेम । एवं पूर्व्वोक्तप्रकारेण यः ॐकारगम्यः भूर्भुवःस्वर्जनकः विराट् पुरुषः ईश्वरः सवितुर्देवस्य मण्डलान्तर्गतः श्रेष्ठतरः प्रकाशकः तेजोरूपः अस्माकं धर्म्मार्थकाममोक्षेषु बुद्धेः प्रेरकः सोऽहमिति चिन्तयाम इत्यर्थः । सोऽहं हंसः इत्यर्थः । ॐकारगम्यम् इतः यतः ॐकारः सोऽहमर्थः इति अतः सोऽहं हंसः इत्यर्थः । एतेन शुद्धचैतन्यात्मकं ब्रह्माहमस्मीति जीवब्रह्मैक्यचिन्तनमेव पर्य्यवसितम् । तत्र सामर्थ्याभावे ध्येयः सदेति प्रश्नतयः । मन्त्रार्थस्तु

निराकारोपासना । आदित्यमण्डलमध्यस्थितनारायणध्यानं साकारोपासना । साकारनिराकारोपासनाद्वयमेकदा कथितम् । तत्रायमर्थः—ब्रह्मप्रतिपादके अस्मिन् गायत्रीमन्त्रे देवी गायत्री प्रकृतिः छन्दः पुरुषो हि नारायणः प्रकृतिपुरुषयोरैक्यं मुक्तिः अतः सोऽहमिति गायत्रीस्वरूपोऽहमिति भावयित्वा तद्रूपेणापि गायत्रीस्वरूपेणापि तेजांसि आदित्यमण्डलान्तःस्थनारायण-तेजांसि प्रविश्य तयोः प्रकृतिपुरुषयोरैक्यभावनया स्वयं निर्गुण ईश्वरो भवति तत्तेजसि प्रविशेदिति वचनस्यायमर्थः । तथाच—

यथादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ १ ॥

इति भार्गववचनम् ।

हृदाकाशेषु यो जीवः साधकैरुपगीयते ।
स च आदित्यरूपेण वह्निर्नभसि राजते ॥ २ ॥

ब्रह्मणि प्रविशतीत्यर्थः ।

गायत्री प्रकृतिर्ज्ञेया ॐकारः पुरुषः स्मृतः ।
तस्मादुभयसंयोगाज्जगत्सर्व्वं प्रवर्त्तते ॥ ३ ॥

इति गायत्र्यर्थः ।

भगवन्देवदेवेश गायत्र्या गतिमुत्तमाम् ।
सर्व्वविद्यापरश्रेष्ठां ब्रूहि त्वं करुणानिधे ॥ १ ॥

ब्रह्मोवाच ।

शृणुध्वं मुनयः सर्व्वे धर्म्मार्थकाममोक्षदा ।
किञ्चिज्जप्ता च गायत्री पुनाति भुवनत्रयम् ॥ २ ॥

ॐ भूर्भुवः स्वस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ।

ॐ इति ॐकारगम्यम्।

ॐकारप्रभवा वेदा ॐकारप्रभवाः सुराः।
ॐकारप्रभवं सर्व्वं जगदेतच्चराचरम्।
अचरात्मचरं जातं यथाग्नौ विस्फुलिङ्गकाः॥ १॥

ॐकारगम्यः नादः नादान्ते ज्योतिर्म्मयः सर्व्वदर्शनीयः स्वेच्छया अनन्तकोटीब्रह्माण्डाः करणीयाः पालनीयाः संहरणीयाः ब्रह्मस्वरूपोऽस्ति तस्माद्भूर्भुवः स्वः सत्त्वरजस्तमोमयं ब्रह्मविष्णुशिवात्मकं चिन्तय गुणत्रयस्य एकत्र सवितुर्द्वारेण उपासनीयः तत्सवितुः देवस्य भर्गः धीमहि वरेण्यं यः नः धियः प्रचोदयादिति भर्गः श्रेष्ठतरप्रकाशकतेजः धीमहीति ॐकारगम्यध्यानम् अखण्डचैतन्यात्मकं वरेण्यं प्रार्थनीयं तत्सवितुर्देवस्य यत् श्रेष्ठतरप्रकाशकतेजः अखण्डचैतन्यात्मकं प्रार्थनीयम् धर्म्मार्थकाममोक्षेषु नः अस्माकं धियः बुद्धीः प्रचोदयात् प्रेरकः सोऽहं हंसः इति आत्मत्वेन चिन्तय। एवं मन्त्रार्थं ध्यात्वा शुद्धचैतन्यात्मकं ब्रह्माहमस्मीति ज्ञात्वा सर्व्वमेव पर्य्यवसितम्। एवमुक्तस्वरूपो भूत्वा तिष्ठति यदा मायान्धकारो भूत्वा मन्त्रज्ञानव्यलीकं भवति तदा साकारब्रह्मध्यानं ध्येयः सदेति प्रकाशितं, तर्हि यदा तु मायान्धकारो भूत्वा मन्त्रज्ञानं न भवतीति तदा साकारब्रह्मध्यानेन मोक्षफलं कस्मात्तदाह मन्त्रस्य महिम्नि विधानकल्पनावशात् यस्य कस्य मन्त्रज्ञानं जातं दृढ़ात्मा भूत्वा ब्रह्मैवाहमिति भाव्यते तेन तत्साकारः भवतु। केन प्रकारेण सोऽपि दर्शनीयो भवति तदाह।

गायत्री प्रकृतिर्ज्ञेया ॐकारः पुरुषः स्मृतः।
तस्मादुभयसंयोगाज्जगत्सर्व्वं प्रवर्त्तते॥ १॥

योऽपि मन्त्रार्थं ज्ञायते तस्य गायत्री प्रकृतिः सोऽपि नारायणः तयोरैकत्वे आनन्दत्वादखण्डज्ञानं भवति तत्तु मोक्षफलम् । स साकारब्रह्मपुरुषः सवितुर्मण्डलमध्ये संसारमण्डलमध्ये यः स सेव्यः । ये योगमार्गेण तं दर्शनीयम् आकाङ्क्षिता भवन्ति ते दर्शनं लभन्ते यस्य दर्शनेन दिव्यज्ञानानन्दं जायते स्वभावनया चतुर्विधमुक्तिं लभन्ते ।

हृदाकाशेषु यो ज्ञात्वा साधकैरुपगीयते ।
सोऽहमादित्यरूपेण वह्निर्नभसि राजते ॥ १ ॥

स वा अयमात्मा ब्रह्म ॐ इत्येकाक्षरं ब्रह्म आपो ज्योतीरसोऽमृतम् । ब्रह्मविज्ञानमानन्दं ब्रह्म इत्याह भगवान् गायत्र्यर्थम् ।

सत्त्वतत्त्वं रजस्तत्त्वं पुरुषप्रकृतिरूपतः ।
तयोरैक्ये समुत्पन्ने आनन्दो मोक्ष उच्यते ॥ १ ॥

इति गायत्र्यर्थः समाप्तः ।

## अथ गायत्रीशापविमोचनमन्त्रो लिख्यते ।

ॐ अस्य श्रीब्रह्मशापविमोचनमन्त्रस्य निग्रहानुग्रहकर्त्ता प्रजापति ऋषिः कामदुघा गायत्री छन्दः ब्रह्मशापविमोचनी गायत्रीशक्तिर्देवता ब्रह्मशापविमोचनार्थे विनियोगः ।

ॐ गायत्री ब्रह्मेत्युपासिता यद्रूपं ब्रह्मविदो विदुस्तां पश्यन्ति धीराः सुमनसा वाचमग्रतः ब्रह्मशापविमुक्ता भव । १ ।

ॐ अस्य श्रीविश्वामित्रशापविमोचनमन्त्रस्य नूतनसृष्टिकर्त्ता विश्वामित्र ऋषिः वाग्दुहा गायत्री छन्दः भुक्तिमुक्तिफलप्रदा विश्वामित्रदीपनी सावित्रीशक्तिर्देवता विश्वामित्रशापविमोचनार्थे विनियोगः ।

ॐ सावित्रीं भजाम्यग्निमुखीं विश्वगर्भां यदुद्भवां देवाश्चक्रिरे विश्वसृष्टिं तां कल्याणीमिष्टकरीं प्रपद्ये यन्मुखान्निःसृतो ऽखिलवेदगर्भः विश्वामित्रशापविमुक्ता भव। २।

ॐ अस्य श्रीवसिष्ठशापविमोचनमन्त्रस्य शापानुग्रहकर्त्ता वसिष्ठ ऋषिः उद्भवा गायत्री छन्दः वसिष्ठानुगृहीता सरस्वती देवता वसिष्ठशापविमोचने विनियोगः।

ॐ तत्त्वा यामि चाचाङ्गेष्वग्नितो धियांसो ध्यायन्ति विष्णोरायुधानि बिभ्रते यशसेऽजनीसु तासौ परमञ्च शश्वद्गायत्रीमामिदुरनूत्तमञ्च धाम सोऽहमैक्यमहं ज्योतिरहमर्कमहं शिवः आत्मज्योतिरहं शुक्लः शुक्लज्योतिरहं समं वसिष्ठशापाद्विमुक्ता भव। ३। ततो योनिमुद्रां प्रदर्शयेत्।

इति गायत्रीशापविमोचनमन्त्रः।

मतान्तरे।

ॐ अस्य श्रीब्रह्मशापविमोचनमन्त्रस्य ब्रह्मा ऋषिः कामदुघा गायत्री छन्दः ब्रह्मानुग्रहशक्तिर्देवता णी वीजं यं शक्तिः ब्रह्मशापविमोचने विनियोगः।

ॐ चामित्यादि षडङ्गन्यासः।

ॐ गायत्री ब्रह्मेत्युपासितं तद्रूपं ब्रह्मणो विदुः।
तां पश्यन्ति च ये धीराः सुमना वाचमुग्रतः॥

ॐ देवि गायत्रि त्वं ब्रह्मशापाद्विमुक्ता भव।

ॐ क्रौं जूं हंसः। ॐ भूस्तत्सवितुर्वरेण्यं सहं जूं क्रौं ॐ। ॐ क्रौं जूं हंसः ॐ। ॐ भुवः भर्गो देवस्य धीमहि सहं जूं क्रौं ॐ। ॐ क्रौं जूं हंसः। ॐ स्वः धियो यो नः प्रचोदयात् सहं जूं क्रौं ॐ। १।

ॐ अस्य श्रीविश्वामित्रशापविमोचनमन्त्रस्य विश्वामित्र ऋषिः वाग्दुहा गायत्री छन्दः नूतनसृष्टिकर्त्ता विश्वामित्र ऋषिरनुग्रहशक्तिर्देवता णी वीजं यं शक्तिः विश्वामित्रशापविमोचने विनियोगः ।

ॐ ह्रामित्यादि षड़ङ्गन्यासं कुर्य्यात् ।

गायत्रीं भजामि अग्निमुखीं विश्वरूपां यदुद्भवां देवाश्चक्रिरे विश्वसृष्टिं तां कल्याणीमिष्टकरीं प्रपद्ये यन्मुखान्निःसृतोऽखिलवेदगर्भां देवि गायत्रि त्वं विश्वामित्रशापाद्विमुक्ता भव । ॐ गायत्रीशापमुत्कीलय हूं फट् स्वाहा । ॐ क्रौं जूं हंसः । ॐ भूः ॐ तत्सवितुर्वरेण्यं सहं जूं क्रौं ॐ । ॐ क्रौं जूं हंसः । ॐ भुवः ॐ भर्गो देवस्य धीमहि सहं जूं क्रौं ॐ । ॐ क्रौ जूं हंसः । ॐ स्वः धियो यो नः प्रचोदयात् सहं जूं क्रौं ॐ । २ ।

ॐ अस्य श्रीवसिष्ठशापविमोचनमन्त्रस्य वसिष्ठ ऋषिः अव्यक्तगायत्री छन्दः वसिष्ठानुग्रहशक्तिर्देवता णी वीजं यं शक्तिः वसिष्ठशापविमोचने विनियोगः ।

ॐ ह्रामिति षड़ङ्गन्यासं कुर्य्यात् ।

ध्यानम्—अग्निर्ज्योतिरहं शुक्लं शुक्लज्योतिरहं शिवः ।
आत्मज्योतिरहं शुक्लं शुक्लज्योती रसो महान् ॥

अमृते अमृतोद्भवे अमृतवर्षिणि अमृतं स्रावय स्वाहा । ॐ क्रौं जूं हंसः इति पूर्व्ववत् । ॐ अहोमहो दिव्ये सन्दधामि सरस्वति अजरे अमरे बहुरूपे नमोऽस्तु ते । वसिष्ठशापाद्विमुक्ता भव । ३ ।

इति जले अर्घं निक्षिपेत् । दश प्रणवं पठेत् ।

इति गायत्रीशापविमोचनम् ।

शापमुक्ता हि गायत्री चतुर्वर्गफलप्रदा ।
अशापमुक्ता गायत्री चतुर्वर्गफलान्तका ॥

इति गायत्रीरहस्योक्तम् ।

## अथ गौतमीयतन्त्रोक्तगायत्रीभाष्यम् ।

ॐकारस्य त्रिरूपन्तु श्वेतं पीतञ्च लोहितम् ।
चतुर्दृष्टञ्च यत्पापमोङ्कारो दहति क्षणात् ॥ १ ॥
तकारस्त्र्यम्बको वर्णः ब्रह्मविष्णुशिवार्च्चितः ।
ब्रह्महत्याकृतं पापं तकारो दहति क्षणात् ॥ २ ॥
त्सकारः श्वेतवर्णस्तु केशवेन सदार्च्चितः ।
गोवधस्य कृतं पापं त्सकारो दहति क्षणात् ॥ ३ ॥
विकारो लोहितो वर्णः शङ्करेण सदार्च्चितः ।
स्त्रीवधस्य कृतं पापं विकारो दहति क्षणात् ॥ ४ ॥
तुकारो लोहितो वर्णः शक्रेणैव सदार्च्चितः ।
स्वर्णस्तेयकृतं पापं तुकारो दहति क्षणात् ॥ ५ ॥
वकारो लोहितो वर्णः स्तुतवर्णैः सदार्च्चितः ।
अन्नपानकृतं पापं वकारो दहति क्षणात् ॥ ६ ॥
रेकारो लोहितो वर्णः सदादित्येन चार्च्चितः ।
गुर्व्वङ्गनाकृतं पापं रेकारो दहति क्षणात् ॥ ७ ॥
णीकारः क्षीरवर्णः स्यात्पार्व्वत्या च सदार्च्चितः ।
भक्ष्याभक्ष्यकृतं पापं णीकारो दहति क्षणात् ॥ ८ ॥
यकारो धूम्रवर्णस्तु धरणीधरपूजितः ।
शूद्रान्नभोजनं पापं यकारो दहति क्षणात् ॥ ९ ॥
भकारः केतकीवर्णः प्रजापतिसदार्च्चितः ।
संसर्गस्य कृतं पापं भकारो दहति क्षणात् ॥ १० ॥

गौंकारः कज्जवर्णश्च बृहस्पतिसदार्च्चितः ।
गुरुनिन्दाकृतं पापं गौंकारो दहति क्षणात् ॥ ११ ॥
देकारो मालतीवर्णः नित्यं शशिसदार्च्चितः ।
भ्रातृदारकृतं पापं देकारो दहति क्षणात् ॥ १२ ॥
वकारः शुक्लवर्णश्च वरुणेन सदार्च्चितः ।
पशुहत्याकृतं पापं वकारो दहति क्षणात् ॥ १३ ॥
स्यकारः काञ्चनाभस्तु महेश्वरसदार्च्चितः ।
पितृहत्याकृतं पापं स्यकारो दहति क्षणात् ॥ १४ ॥
धीकारो मेघवर्णश्च यमराजसदार्च्चितः ।
योनिदेशकृतं पापं धीकारो दहति क्षणात् ॥ १५ ॥
मकारस्ताम्रवर्णस्तु कन्दर्पेण सदार्च्चितः ।
मिथ्यालापकृतं पापं मकारो दहति क्षणात् ॥ १६ ॥
हिकारो त्र्यतसीवर्णः अग्निदैवतपूजितः ।
शोणभक्ष्यकृतं पापं हिकारो दहति क्षणात् ॥ १७ ॥
धिकारो पाण्डुवर्णः स्यादर्च्चितो मुनिभिः सदा ।
प्रतिग्रहकृतं पापं धिकारो दहति क्षणात् ॥ १८ ॥
योकारस्ताम्रवर्णस्तु योगिभिः सर्व्वदार्च्चितः ।
स्वकायेन कृतं पापं योकारो दहति क्षणात् ॥ १९ ॥
योकारो मौक्तिको वर्णः सदा शक्रेण पूजितः ।
सङ्कल्पितकृतं पापं योकारो दहति क्षणात् ॥ २० ॥
नकारो रुद्रवर्णः स्यादीशानेन सदार्च्चितः ।
जलपानकृतं पापं नकारो दहति क्षणात् ॥ २१ ॥
प्रकारो हिङ्गुलाभस्तु मन्मथेन सदार्च्चितः ।
अगम्यागमनं पापं प्रकारो दहति क्षणात् ॥ २२ ॥

चोकारः सिन्दूराभश्च त्वनलेन सदार्च्चितः ।
अत्युत्कृष्टकृतं पापं चोकारो दहति क्षणात् ॥ २३ ॥
दकारो जम्बुवर्णश्च शशिना सर्व्वदार्च्चितः ।
नानायोनिकृतं पापं दकारो दहति क्षणात् ॥ २४ ॥
यात्कारो रक्तवर्णश्च सदाशिवसदार्च्चितः ।
मित्रामित्रकृतं पापं यात्कारो दहति क्षणात् ॥ २५ ॥
भाष्येन गौतमीयेन गायत्रीं पठते द्विजः ।
इहस्थो वा परस्थो वा सर्व्वत्र सुखमाप्नुयात् ॥ २६ ॥

## अथ गायत्रीयन्त्रलक्षणम् ।

शक्तेर्वाह्यकृशानुकोणविलसद्भूरादिषट्कर्णिकं
वस्वब्जं शरयुग्मकेशरयुतं पत्रे त्रिवर्णैर्मनोः ।
चूड़ामन्त्रतुरीयवेष्टितमनुं क्ष्माकोणतूर्य्यान्वितं
गायत्र्याः कथितं महत्प्रभृतिभिर्यन्त्रञ्च दीक्षाङ्कितम् ॥ १ ॥
प्रथमञ्च त्रिकोणं स्याद्द्वितीयं कर्णिकावृतम् ।
तद्बाह्येऽष्टदलं पद्मं तद्बाह्ये चैव वृत्तकम् ॥ २ ॥
तद्बाह्ये वसुकोणं स्यात्पृथिवीलाञ्छनं स्मृतम् ।
चतुर्दिक्षु चतुर्द्वारं चतुर्वेदेन संयुतम् ॥ ३ ॥
रथाकृतिं ततः कृत्वा चक्राभ्यान्तु विभूषितम् ।
अग्निसोमात्मकं वीजं चक्राभ्यां विन्यसेद्बुधः ॥ ४ ॥
अनन्तं सर्पराजानं रथरज्जुञ्च संस्मरेत् ।
रथाकृतिं तथालिख्य मण्डलं परिकल्पयेत् ॥ ५ ॥
अनेनैव प्रकारेण द्वात्रिंशल्लक्षणस्य च ।
अग्निरूपो भवेद्विप्रो वचनञ्चाशु सिद्ध्यति ॥ ६ ॥

शताक्षरं न्यसेद्यन्त्रं गायत्रीं वेदमातरम् ।
सम्पूजयित्वा यो धीमान्स मुक्तो नात्र संशयः ॥ ७ ॥

अथ गायत्रीयन्त्रव्याख्या लिख्यते ।

प्रथमञ्च त्रिकोणं स्यादिति । स्वर्णरौप्यताम्रनिर्म्मितपात्रे स्वर्णादिशलाकया त्रिकोणाकाररेखां विलिखेत् । द्वितीयमिति—लिखितत्रिकोणाकाररेखोपरि अपरत्रिकोणाकाररेखां कुर्य्यात् । अर्थात् षट्कोणं कारयेत् । कर्णिकावृतमिति—षट्कोणं वलयाकाररेखया वेष्टयेत् । तद्वाह्येऽष्टदलं पद्ममिति—वलयाकाररेखोपरि अष्टदलकमलं लिखेत् । तद्वाह्ये चैव वृत्तकमिति—अष्टदलकमलोपरि पूर्व्ववद्वलयाकाररेखामाचरेत् । ततः अनन्तं रथरज्जुं कल्पयेत् । आद्यन्तु कर्णिकास्थानमिति षट्कर्णिकासु भूरादिसत्यपर्य्यन्तं षट् व्याहृतयो लेख्याः । मध्ये सत्यमिति लेखनीयम् । तदूर्द्ध्वकेशरस्थाने अकारादिषोड़शस्वरान् द्विद्विक्रमेण विलिखेत् । तदुपरि पत्रमूलेषु कादिवर्गान् क्रमेण विलिखेत् । पत्रमध्येषु ॐकारवर्ज्जितत्रिपदां गायत्रीं त्रित्रिक्रमेण लिखेत् । वसुकोणेषु आपो ज्योतीरसोऽमृतम् इत्यादिवर्णपर्य्यन्तं तानि षोड़शाक्षराणि द्विद्विक्रमेण लिखेत् । ततस्त्रिकोणेषु ॐकारत्रितयं लिखेत् । ततः परोरजसे सांवदोम् इत्यष्टौ वर्णान् । अन्यग्रन्थश्रुतत्वाद्वसुकोणाष्टसन्धिषु अष्टाक्षराणि लेख्यानि । ततः वह्निसोमात्मकं वीजं चक्राभ्यां न्यसेत् । चतुर्द्वारे चतुर्वेदान् न्यसेत् । अनेनेदं गायत्रीयन्त्रं यो जानाति स सर्व्वपापैर्न लिप्यते ।

इति पञ्चरात्रोक्तगायत्रीयन्त्रनिर्णयः ।

## अथ शताक्षरा गायत्री।

अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ अं अः (१६)। क्लीं (१)। भूर्भुवः स्वः (४)। तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् (२४)। आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरों (१६)। परोरजसे सावदों (८)। ॐ ॐ ॐ ॐ (४)। ॐ महः ॐ जनः ॐ तपः ॐ सत्यं (१२)। ॐ ऋक् ॐ यजुः ॐ साम ॐ अथर्व्व (१३)। र (१)। ठ (१)। समष्टि १००। इति शताक्षरा गायत्री।

## अथ गायत्रीवहिर्जपविधिः।

आसनशुद्ध्यादिकं कृत्वा गायत्रीयन्त्रे जले वा आवाह्य प्राणप्रतिष्ठां कुर्य्यात्। तद्यथा। ॐकारस्य ब्रह्मा ऋषिः गायत्री छन्दः अग्निर्देवता सर्व्वकर्म्मारम्भे विनियोगः।

ॐ खं ब्रह्मेत्यादि-ब्राह्मणं ध्यात्वा प्रणवन्यासं कुर्य्यात्। ॐ अं सत्त्वगुणात्मने नमः नाभौ। ॐ उं रजोगुणात्मने नमः हृदये। ॐ मं तमोगुणात्मने नमः मूर्द्ध्नि।

इति प्रणवन्यासः। १।

ॐ सप्तव्याहृतीनां प्रजापति ऋषिः गायत्र्युष्णिगनुष्टुब्वृहतीपङ्क्तित्रिष्टुब्जगत्यः छन्दांसि अग्निवायुसूर्य्यबृहस्पतिवरुणेन्द्रविश्वेदेवा देवताः प्राणायामे विनियोगः।

प्रजापतिर्लोकानभ्यपतदित्यादि-ब्राह्मणं ध्यात्वा व्याहृतिगायत्र्या न्यसेत्। ॐ भूः पादयोः। ॐ भुवः जानुनोः। ॐ स्वः कटिप्रदेशे। ॐ महः नाभौ। ॐ जनः हृदये। ॐ तपः कण्ठे। ॐ सत्यं भ्रुवोर्मध्ये। इति व्याहृतिन्यासः। २।

गायत्र्या विश्वामित्र ऋषिः गायत्रीच्छन्दः सविता देवता अग्निर्मुखमुपनयने प्राणायामे विनियोगः।

इदं सर्व्वभूतमित्यादि-ब्राह्मणं ध्यात्वा त्रिपदा गायत्र्या न्यसेत्। ॐ अं नमः नाभौ। ॐ उं नमः हृदये। ॐ मं नमः मूर्द्ध्नि। ॐ तं नमः पादाङ्गुष्ठयोः। ॐ त्सं नमः गुल्फयोः। ॐ विं नमः जङ्घयोः। ॐ तुं नमः जानुनोः। ॐ वं नमः उर्व्वोः। ॐ रें नमः गुह्ये। ॐ णीं नमः लिङ्गे। ॐ यं नमः कट्याम्। ॐ भं नमः नाभौ। ॐ गीं नमः जठरे। ॐ दें नमः स्तनयोः। ॐ वं नमः हृदये। ॐ स्यं नमः कण्ठे। ॐ धीं नमः वक्त्रे। ॐ मं नमस्तालुदेशे। ॐ हिं नमः घ्राणयोः। ॐ धिं नमश्चक्षुषोः। ॐ यों नमः भ्रुवोर्मध्ये। ॐ यों नमः ललाटे। ॐ नः नमः पूर्व्वमुखे। ॐ प्रं नमः दक्षिणमुखे। ॐ चों नमः पश्चिममुखे। ॐ दं नमः उत्तरमुखे। ॐ यात् नमः मूर्द्ध्नि।

इति त्रिपदान्यासः। ३।

ॐ शिरसः प्रजापति ऋषिर्यजुर्ब्रह्माग्निवायुसूर्य्या देवताः प्राणायामे विनियोगः।

सशिरस्कां त्रिः पठेदित्यादि-ब्राह्मणं ध्यात्वा चूड़ागायत्र्या न्यसेत्। ॐ आपः पादयोः। ॐ ज्योतिर्गुह्ये। ॐ रसः लिङ्गे। ॐ अमृतं नाभौ। ॐ ब्रह्म हृदये। ॐ भूः कण्ठे। ॐ भुवः भ्रुवोर्मध्ये। ॐ स्वः ललाटे। ॐ महः मूर्द्ध्नि।

इति शिरोन्यासः। ४।

एवं न्यासचतुष्टयं विधाय पूरककुम्भकरेचकक्रमेण प्राणायामत्रयं कुर्य्यात्।

ॐ गायत्र्या विश्वामित्र ऋषिर्गायत्री च्छन्दः सविता देवता ओं बीजं यं शक्तिः ब्रह्मशीर्षां रुद्रशिखां विष्णुहृदयाम् अग्निमुखीं शुक्लवर्णां सांख्यायनसगोत्रां कौण्डिन्यप्रवरां त्रैलोक्यचरणां पृथिवीकुक्षिम् उपनयने विनियोगः ।

पुनस्त्रिपदागायत्रीं वा इदं सर्व्वभूतमित्यादि ब्राह्मणं ध्यात्वा अङ्गन्यासं कुर्य्यात् ।

ॐ भूः अङ्गुष्ठाभ्यां नमः । ॐ भुवस्तर्जनीभ्यां स्वाहा । ॐ स्वः मध्यमाभ्यां वषट् । ॐ तत्सवितुर्वरेण्यम् अनामिकाभ्यां हूं । ॐ भर्गो देवस्य धीमहि कनिष्ठाभ्यां वौषट् । ॐ धियो यो नः प्रचोदयात् करतलकरपृष्ठाभ्यां फट् ।

एवमङ्गन्यासः । अस्त्राय फडिति शेषः ।

त्रिपदागायत्र्या पादद्वन्द्वतः मूर्द्धपर्य्यन्तम् प्रत्यक्षरन्यासं कुर्य्यात् ।

ॐ तत् पादयोः । ॐ सवितुर्जघनयोः । ॐ वरेण्यं कटिप्रदेशे । ॐ भर्गः नाभौ । ॐ देवस्य हृदये । ॐ धीमहि गले । ॐ धियः नासाग्रे । ॐ यः चक्षुषोः । ॐ नः ललाटे । ॐ प्रचोदयान्मूर्ध्नि ।

पुनर्मूर्द्ध्नः पादपर्य्यन्तम् । ॐ तन्मूर्ध्नि । ॐ सवितुर्भाले । ॐ वरेण्यं कण्ठे । ॐ भर्गः बाह्वोः । ॐ देवस्य स्तनयोः । ॐ धीमहि हृदि । ॐ धियः नाभौ । ॐ यः गुह्ये । ॐ नः जानुनोः । ॐ प्रचोदयात् पादयोः ।

एवं विन्यस्य चतुर्विंशतिमुद्रां दर्शयेत् इति ।

## अथ गायत्री-सावित्री-सरस्वती-व्याहृति-चूड़ानां प्रमाणनिरूपणम् ।

व्याहृतिर्द्वादश वर्णाश्चतुर्विंशतिस्त्रिपदा ।
चूड़ा चतुर्द्दश ज्ञेया प्रणवं दश योजयेत् ॥ १ ॥
गायत्र्यष्टाक्षरा ज्ञेया सावित्र्यष्टाक्षरा तथा ।
सरस्वती तथा प्रोक्ता जपकर्म्मण्युदाहृता ॥ २ ॥

पूर्व्वोक्तश्लोकद्वयस्य विशेषव्याख्या लिख्यते ।

व्याहृतिगायत्री यथा ।

भूः भुवः स्वः महः जनः तपः सत्यम् ।

इति द्वादशवर्णा व्याहृतिगायत्री ।

त्रिपदागायत्री यथा ।

तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ।

शेषोक्ततकारस्तु हलन्तत्वान्न गणनीयः ।

इति चतुर्विंशत्यक्षरा त्रिपदा ।

चूड़ागायत्री यथा ।

आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वः ।

इति चतुर्द्दशाक्षरा चूड़ा ।

अथ व्याहृतिगायत्री सप्तप्रणवयुक्ता अनया रीत्या पठनीया ।

ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यम् ।

एषा व्याहृतिगायत्र्यूनविंशत्यक्षरा ।

अथ त्रिपदागायत्र्यादौ प्रणवयुक्ता पाठ्या।

ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्।

इति प्रणवयुक्ता चतुर्विंशत्यक्षरैषा त्रिपदा।

चूड़ागायत्र्यादावन्ते पाठ्यैवम्।

ॐ आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम्।

इति चतुर्द्दशाक्षरा चूड़ा।

आसां समष्टिः षट्त्र्यक्षरा।

## अथ ध्यानम्।

कुन्देन्दुस्फटिकावदाततनुः शुभ्रांशुका स्रग्विणी
नानाभूषणभूषितानलमुखी मार्त्तण्डविम्बस्थिता।
रक्ताश्यामलशुभ्रपीतचतुरास्या श्वेतराजीवदृक्
गायत्री मधुरं सदैव चतुरो वेदांश्चतुर्भिर्मुखैः॥ १॥
सा देवी कटकाक्षसूत्रकरका शङ्खादि संबिभ्रती
शूलं चारुकपालमेवमभयाभीष्टं चतुर्भिः सदा।
स्थानेष्वेषु यथोक्तरूपश्रुतिभिर्मन्त्राक्षरैश्चिन्तिता
सा देवी प्रपुनातु देवजननी ध्यायेत्त्रिलोकेश्वरीम्॥ २॥

एवं ध्यात्वा मानसोपचारैः संपूज्य ततो हृदयं पठित्वा तदनन्तरं जपः, जपान्ते कवचं पठेत्।

अथ षट्त्र्यक्षरगायत्रीमन्त्रो यथा।

ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यम्। ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्। ॐ आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम्।

इत्यनेन यथाशक्त्या जपेत् । ॐ गुह्यातिगुह्यगोप्त्री त्वमिति जपसमर्पणम् । इति वह्निर्जपविधिः समाप्तः ।

---

## अथ यजुर्व्वेदीयतर्पणम् ।

ॐ यज्जाग्रत इति मन्त्रस्य प्रजापतिर्ऋषिः त्रिष्टुप् छन्दो मनो देवता उपस्थाने विनियोगः ।

ॐ यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति दूरम् ।
गमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसङ्कल्पमस्तु ॥ १ ॥
ॐ येन कर्म्माण्यपसो मनीषिणो यज्ञे कृण्वन्तु विदथेषु धीराः ।
यत्पूर्व्वं यक्षमन्तः प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु ॥ २ ॥
ॐ येनेदं भूतं भुवनं भविष्यत्परिगृहीतममृतेन सर्व्वम् ।
येन यज्ञस्तायते सप्त होता तन्मे मनः शिवसङ्कल्पमस्तु ॥ ३ ॥
यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु ।
यस्मान् ऋते किञ्च न कर्म्म क्रियते तन्मे मनः शिवसङ्कल्पमस्तु ॥ ४ ॥
यस्मिन्नृचः साम यजूꣳषि यस्मिन् प्रतिष्ठिता रथनाभा विवाराः ।
यस्मिंश्चितं सर्व्वमोतं प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु ॥ ५ ॥
सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीषुभिर्वाजिन इव ।
हृत्प्रतिष्ठयँ यदजिरं जविष्ठं तन्मे मनः शिवसङ्कल्पमस्तु ॥ ६ ॥
ॐ आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्त्यञ्च ।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥ ७ ॥

ततः कुशत्रयं यज्ञोपवीतं गृहीत्वा ॐ इषे त्वोर्जे त्वा वायव स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्म्मणे । ॐ आप्यायध्व-मघ्न्या इन्द्राय भागं प्रजावतीरनमीवा अयक्ष्मा । मा वस्तेन ईषत

मा वशर्ठ॰सो ध्रुवा अस्मिन् गोपतौ स्यात बह्वीर्य्यजमानस्य पशून् पाहि ॥ वसोः पवित्रमसि । ॐ परमऋषिभ्यो नमः ।

पुनः गायत्रीं त्रिवारं पठित्वा कुशत्रयेण शिरसि मार्ज्जनम् । ततः प्रागग्रकुशत्रयं स्थापयित्वा विश्वेदेवानावाहयेत् ।

ॐ विश्वान्देवानावाहयिष्ये । आवाहय । ॐ विश्वेदेवास आगत शृणुता मयि मंहवम् । एवं वर्हिर्निषीदत । ॐ ब्रह्माद्यो विश्वेदेवा अत्रागच्छत । ॐ विश्वेदेवा शृणुते मंहवं मे ये अन्तरीचे ये उपद्यवि ष्ठा येऽग्निजिह्वा उत वो यजत्रा आसाद्यास्मिन् वर्हिषि मादयध्वम् ।

सव्येन अङ्गुलिमूले एकैकाञ्जलिना तर्पयेत् । ॐ ब्रह्मा तृप्यताम् । ॐ विष्णुस्तृप्यताम् । ॐ रुद्रास्तृप्यन्ताम् । ॐ प्रजापतिस्तृप्यताम् । अङ्गुल्यग्रे ॐ देवास्तृप्यन्ताम् । ॐ छन्दांसि तृप्यन्ताम् । ॐ वेदास्तृप्यन्ताम् । ॐ ऋषयस्तृप्यन्ताम् । ॐ सनातनास्तृप्यन्ताम् । ॐ गन्धर्व्वाचार्य्यास्तृप्यन्ताम् । ॐ इतराचार्य्यास्तृप्यन्ताम् । ॐ संवत्सराः सावयवास्तृप्यन्ताम् । ॐ देव्यस्तृप्यन्ताम् । ॐ अप्सरसस्तृप्यन्ताम् । ॐ नागास्तृप्यन्ताम् । ॐ सागरास्तृप्यन्ताम् । ॐ पर्व्वतास्तृप्यन्ताम् । ॐ सरितस्तृप्यन्ताम् । ॐ मनुष्यास्तृप्यन्ताम् । ॐ यक्षास्तृप्यन्ताम् । ॐ रक्षांसि तृप्यन्ताम् । ॐ पिशाचास्तृप्यन्ताम् । ॐ सुपर्णास्तृप्यन्ताम् । ॐ भूतानि तृप्यन्ताम् । ॐ पशवस्तृप्यन्ताम् । ॐ वनस्पतयस्तृप्यन्ताम् । ॐ ओषधयस्तृप्यन्ताम् । ॐ भूतग्रामचतुष्टयं तृप्यताम् ।

ततः आवाहन-कुशान् उत्तराग्रान् कृत्वा स्वयं चोत्तराभिमुखः कण्ठेकृतोपवीतः सनकादिसप्तमनुष्यानावाह्य द्वाभ्यामञ्जलिभ्यां तर्पयेत् ।

ॐ सनकाद्याः सप्त मनुष्या अत्रागच्छत। ॐ सनकस्तृप्यताम्। ॐ सनन्दस्तृप्यताम्। ॐ सनातनस्तृप्यताम्। ॐ कपिलस्तृप्यताम्। ॐ आसुरिस्तृप्यताम्। ॐ वोढुस्तृप्यताम्। ॐ पञ्चशिखस्तृप्यताम्।

ततः आवाहन-कुशमोटकान् दक्षिणाग्रान् कृत्वा अपसव्यः कव्यवालनलादीन् दिव्यपितॄनावाह्य त्रिभिरञ्जलिभिस्तर्पयेत्।

ॐ कव्यवालनलादयो दिव्यपितरः अत्रागच्छत। ॐ वसवो रुद्रादित्याः अत्रागच्छत। ॐ पितॄनावाहयिष्ये। आवाहय। ॐ उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि। उशन्नुशत आवह पितॄन्हविषे अत्तवे॥ अमुकसगोत्र अस्मत्पितः अमुकदेवशर्म्मन् अत्रागच्छ। अमुकसगोत्र अस्मत्पितामह अमुकदेवशर्म्मन् अत्रागच्छ। अमुकसगोत्र अस्मत्प्रपितामह अमुकदेवशर्म्मन् अत्रागच्छ। अमुकसगोत्रे अस्मन्मातः अमुकि देवि अत्रागच्छ। अमुकसगोत्रे अस्मत्पितामहि अमुकि देवि अत्रागच्छ। अमुकसगोत्रे अस्मत्प्रपितामहि अमुकि देवि अत्रागच्छ। अमुकसगोत्र अस्मन्मातामह अमुकदेवशर्म्मन् अत्रागच्छ। अमुकसगोत्र अस्मत्प्रमातामह अमुकदेवशर्म्मन् अत्रागच्छ। अमुकसगोत्र अस्मद्वृद्धप्रमातामह अमुकदेवशर्म्मन् अत्रागच्छ।

ॐ आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः।
अस्मिन् यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान्॥ १॥

इति नमस्कारः।

कव्यवालनलस्तृप्यतामिदं जलं तस्मै स्वधा। उत्कालीयमते स्वधा नमः। ॐ सोमस्तृप्यतामिदं जलं तस्मै स्वधा। ॐ यमस्तृप्यतामिदं जलं तस्मै स्वधा। ॐ अर्य्यमा तृप्यतामिदं जलं

तस्मै स्वधा । ॐ अग्निष्वात्ताः पितरस्तृप्यन्तामिदं जलं तेभ्यः स्वधा । ॐ सोमपाः पितरस्तृप्यन्तामिदं जलं तेभ्यः स्वधा । ॐ वर्हिसदः पितरस्तृप्यन्तामिदं जलं तेभ्यः स्वधा । ॐ वसवस्तृप्यन्तामिदं जलं तेभ्यः स्वधा । ॐ रुद्रास्तृप्यन्तामिदं जलं तेभ्यः स्वधा । ॐ आदित्यास्तृप्यन्तामिदं जलं तेभ्यः स्वधा ।

इति त्रिस्त्रिस्तर्पणम् ।

ॐ यमाय नमः । ॐ धर्म्मराजाय नमः । ॐ मृत्यवे नमः । ॐ अन्तकाय नमः । ॐ वैवस्वताय नमः । ॐ कालाय नमः । ॐ सर्व्वभूतक्षयाय नमः । ॐ औदुम्बराय नमः । ॐ दध्नाय नमः । ॐ नीलाय नमः । ॐ परमेष्ठिने नमः । ॐ वृकोदराय नमः । ॐ चित्राय नमः । ॐ चित्रगुप्ताय नमः ।

प्रत्येकमञ्जलिदानम् ।

## अथ पितृतर्पणम् ।

ॐ उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः । असुं य ईयुरवृका ऋतज्ञास्तेनोवन्तु पितरो हवेषु ॥ अमुकसगोत्रोऽस्मत्पिता अमुकदेवशर्म्मा तृप्यतामिदं जलं तस्मै स्वधा । ॐ अङ्गिरसो नः पितरो नवग्वा अथर्व्वाणो भृगवः सोम्यासः । तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥ अमुकसगोत्रोऽस्मत्पिता अमुकदेवशर्म्मा तृप्यतामिदं जलं तस्मै स्वधा । ॐ आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः । अस्मिन् यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेवन्त्वस्मान् ॥ अमुकसगोत्रोऽस्मत्पिता अमुकदेवशर्म्मा तृप्यतामिदं जलं तस्मै स्वधा ।

ॐ ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधा स्थ तर्पयत मे पितॄन् । अमुकसगोत्रोऽस्मत्पितामहो अमुकदेवशर्म्मा तृप्यतामिदं जलं तस्मै स्वधा । ॐ पितृभ्यः स्वधा, पितृभ्यः स्वधा नमः । पितामहेभ्यः स्वधा, पितामहेभ्यः स्वधा नमः । प्रपितामहेभ्यः स्वधा, प्रपितामहेभ्यः स्वधा नमः । ॐ अक्षन् पितरोऽमीमदन्त पितरोऽतीतृपन्त पितरः शुन्धध्वम् । अमुकसगोत्रोऽस्मत्पितामहो अमुकदेवशर्म्मा तृप्यतामिदं जलं तस्मै स्वधा । ॐ ये चेह पितरो ये च नेह याँश्च विद्म याँ उ च न प्रविद्म । त्वं वेत्थ यति ते जातवेदः स्वधाभिर्य्यज्ञꣳ सुकृतं जुषस्व ॥ अमुकसगोत्रोऽस्मत्पितामहोऽमुकदेवशर्म्मा तृप्यतामिदं जलं तस्मै स्वधा ।

ॐ मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः । अमुकसगोत्रोऽस्मत्प्रपितामहोऽमुकदेवशर्म्मा तृप्यतामिदं जलं तस्मै स्वधा । ॐ मधु नक्तमुतोषसो मधुमत्पार्थिवꣳ रजः । मधु द्यौरस्तु नः पिता । अमुकसगोत्रोऽस्मत्प्रपितामहोऽमुकदेवशर्म्मा तृप्यतामिदं जलं तस्मै स्वधा । ॐ मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्य्यः । माध्वीर्गावो भवन्तु नः । अमुकसगोत्रोऽस्मत्प्रपितामहोऽमुकदेवशर्म्मा तृप्यतामिदं जलं तस्मै स्वधा ।

अमुकसगोत्राः अस्मत्पितृपितामहप्रपितामहाः अमुकदेवामुकदेवामुकदेवशर्म्माणस्तृप्यन्तामिदं जलं तेभ्यः स्वधा । ३ ।

नमस्कारः ।

ॐ नमो वः पितरः शुष्माय नमो वः पितरस्तपसे । नमो वः पितरो यज्जीवं तस्मै नमो वः पितरो रसाय । नमो वः पितरो घोराय मन्यवे स्वधायैभ्यः पितरो नमः ।

# अथ मातृतर्पणम् ।

अमुकसगोत्रा अस्मन्माता अमुका देवी तृप्यतामिदं जलं तस्यै स्वधा । ३ । अमुकसगोत्रा अस्मत्पितामही अमुका देवी तृप्यतामिदं जलं तस्यै स्वधा । ३ । अमुकसगोत्रा अस्मत्प्रपितामही अमुका देवी तृप्यतामिदं जलं तस्यै स्वधा । ३ । अमुकसगोत्रा अस्मन्मातृपितामहीप्रपितामह्यः अमुकदेवी-अमुकदेवी-अमुकदेव्यस्तृप्यन्तामिदं जलं ताभ्यः स्वधा । ३ ।

अमुकसगोत्रोऽस्मन्मातामहोऽमुकदेवशर्म्मा तृप्यतामिदं जलं तस्मै स्वधा । ३ । अमुकसगोत्रोऽस्मत्प्रमातामहोऽमुकदेवशर्म्मा तृप्यतामिदं जलं तस्मै स्वधा । ३ । अमुकसगोत्रोऽस्मद्वृद्धप्रमातामहोऽमुकदेवशर्म्मा तृप्यतामिदं जलं तस्मै स्वधा । ३ । अमुकसगोत्राः अस्मन्मातामहप्रमातामहवृद्धप्रमातामहाः अमुकदेव-अमुकदेव-अमुकदेव-शर्म्माणस्तृप्यन्तामिदं जलं तेभ्यः स्वधा । ३ ।

एवं ज्येष्ठकनिष्ठतातज्येष्ठभ्रातृकनिष्ठभ्रातृप्रभृतिभ्यो दद्यात् ।

ततः सव्यः कुशाग्रतहस्तः ।

देवाः सुरास्तथा नागा गन्धर्व्वा यक्षराक्षसाः ।
पिशाचा गुह्यकाः सिद्धाः कुष्माण्डास्तरवः खगाः ।
जलेचरा भूनिलया वाय्वाहाराश्च जन्तवः ।
तृप्तिमिते प्रयान्त्वाशु मद्दत्तेनाम्बुनाऽखिलाः ॥ १ ॥

इति देवतीर्थेन एकाञ्जलिं दद्यात् ।

पुनः अपसव्ये तिलं गृहीत्वा ।

नरकेषु समस्तेषु यातनासु च ये स्थिताः ।
तेषामाप्यायनायैतद्दीयते सलिलं मया ॥ १ ॥

इति पितृतीर्थेन एकाञ्जलिं दद्यात् ।

ॐ येऽबान्धवा बान्धवा ये येऽन्यजन्मनि बान्धवाः ।
ते तृप्तिमखिलां यान्तु ये चास्मत्तोयकाङ्क्षिणः ॥ १ ॥

इति पितृतीर्थेन एकाञ्जलिं दद्यात् ।

अथ भीष्मतर्पणम् ।

व्याघ्रपद्यसगोत्राय साङ्कृतिप्रवराय च ।
अपुत्त्राय ददाम्येतत् सलिलं भीष्मवर्म्मणे ॥

इति अञ्जलित्रयं दद्यात् ।

ततो नमस्कारः ।

भीष्मः शान्तनवो वीरः सत्यवादी जितेन्द्रियः ।
आभिरद्भिरवाप्नोतु पुत्त्रपौत्त्रोचितां क्रियाम् ॥ १ ॥

अथ वस्त्रनिष्पीड़ितोदकदानम् ।

ये तु चास्मत्कुले जाता अपुत्त्रा गोत्रिणो मृताः ।
ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीड़ितोदकम् ॥

इति पठित्वा आवाहनकुशान् तर्पणकुशैः सह द्विगुणीकृत्य स्नानवस्त्रनिष्पीड़ितोदकं स्थले क्षिपेत् । वारुणस्नानाऽशक्तौ असामर्थ्ये अन्येनैव कपिलस्नानादिनापि तर्पणादिकं कुर्य्यात् ।

ततः सव्यः सूर्य्याभिमुखः द्विराचम्य ऋष्यादिकं कृत्वा अङ्गन्यासकरन्यासाभ्यां सह यथाशक्ति गायत्रीं जपेत् । ततो जले वा स्थले अष्टदलपद्मं विलिख्य ॐ हंसः शुचिषत् इति मन्त्रं पठित्वा ॐ हंसः सूर्य्याय स्वाहा इति सूर्य्यार्घं दद्यात् ।

ततो नमस्कारः ।

ॐ नमस्ते विष्णुरूपाय नमस्ते ब्रह्मरूपिणे ।
सहस्ररश्मये नित्यं नमस्ते सर्व्वतेजसे ॥ १ ॥
नमस्ते रुद्रवपुषे नमस्ते भक्तवत्सल ।
जगत्स्वामिन्नमस्तेऽस्तु दिव्यचन्दनरूपधृक् ॥ २ ॥
पद्मनाभ नमस्तेऽस्तु कुण्डलाङ्गदभूषित ।
नमस्ते सर्व्वलोकेश सुप्तानां वापि बुद्ध्यसे ॥ ३ ॥
सुकृतं दुष्कृतं चैव सर्व्वं पश्यसि सर्व्वदा ।
सत्यदेव नमस्तेऽस्तु प्रसीद मम भास्कर ।
दिवाकर नमस्तेऽस्तु प्रभाकर नमोऽस्तु ते ॥ ४ ॥

प्रदक्षिणम् ।

यानि कानि च पापानि जन्मान्तरकृतानि च ।
तानि तानि प्रणश्यन्ति प्रदक्षिणं पदे पदे ॥ १ ॥

प्रदक्षिणमन्त्रः ।

ॐ नमः सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे ।
त्रयीमयाय त्रिगुणात्मधारिणे विरञ्चिनारायणशङ्करात्मने ॥१॥

अथ फलश्रुतिः ।

आदित्याय नमस्कारं ये कुर्व्वन्ति दिने दिने ।
जन्मान्तरसहस्रेषु दारिद्र्यं नोपजायते ॥ १ ॥

इति तर्पणविधिः समाप्तः ।

—

## अथ पूजाविधिः ।

देहशुद्धिः स्थानशुद्धिर्भूतशुद्धिस्ततः परम् ।
तत्त्वशुद्धिर्द्रव्यशुद्धिः पूजायां शुद्धिपञ्चकम् ॥ १ ॥

तत्रादौ देहशुद्धिः ।

स्नातो निर्म्मलशुद्धसूक्ष्मवसनो धौताङ्घ्रिपाण्याननः
स्वाचान्तः सुपवित्रमुद्रितकरः श्वेतोर्द्ध्वपुण्ड्रोज्ज्वलः ।
प्राचीदिग्वदनो निबद्ध सुदृढं पद्मासनं स्वस्तिकं
वासीनः स्वगुरून् गणाधिपमथो वन्देत बद्धाञ्जलिः ॥ १ ॥

कुशाजिनपटोत्तरं रुचिरमासनं संश्रितो
निबद्धदृढमासनं किमथ पङ्कजं स्वस्तिकम् ।
पुरन्दरहरिन्मुखो धनददिङ्मुखो वाजिनं
दधीत जपसाधनं विमलगन्धपुष्पादिकम् ॥ २ ॥

अथ स्थानशुद्धिः ।

पुण्यदेशे नदीतीरे पर्व्वते शिवसन्निधौ ।
विष्णुक्षेत्रे कुरुक्षेत्रे स्वक्षेत्रे वार्च्चयेच्छिवाम् ॥ १ ॥

सिन्धोस्तीरे वटदलतले गोकुले नाकुले वा
देवागारे शिखरिशिखरे रम्यमालूरमूले ।
नद्याः कूले किमथ ह्रदये स्वानुकूले स्थले वा
स्वे वावासे नियमितमतिर्निर्वहेत्पूर्व्वसेवाम् ॥ २ ॥

पूजादौ सूर्य्यार्घः ।

यावन्न दीयते चार्घो भास्कराय विधानतः ।
तावन्न पूजयेद्विष्णुं शङ्करं वा सुरेश्वरीम् ॥ ३ ॥

ॐ अस्य श्रीसूर्य्यमन्त्रस्य भार्गव ऋषिः गायत्री च्छन्दः मार्त्तण्डभैरवसूर्य्यौ देवता मम स्वेष्टदेवताप्रीतिपूर्व्वकेष्टाप्तये श्रीसूर्य्यार्घकरणे विनियोगः।

ॐ ह्रां अङ्गुष्ठाभ्यां नमः। ॐ ह्रीं तर्ज्जनीभ्यां स्वाहा। ॐ ह्रूं मध्यमाभ्यां वौषट्। ॐ ह्रैं अनामिकाभ्यां हूं। ॐ ह्रौं कनिष्ठाभ्यां वौषट्। ॐ ह्रः करतलकरपृष्ठाभ्यां फट्।

एवमङ्गन्यासः। अस्त्राय फड़िति शेषः।

रक्ताम्भोरुहमध्यगं त्रिनयनं रक्ताम्बरं भास्करं
रक्तौघाङ्गविभूषणं सुरनरैः संसेव्यपादाम्बुजम्।
स्मेरास्याम्बुरुहं किरीटशिखरं पाशाङ्कुशाद्याम्बुजं
बिभ्राणं करपल्लवैः सुरुचिरं मार्त्तण्डदेवं भजे॥ १॥

इति सम्पूज्य सोपचारैः पद्ममण्डले ताम्रपात्रे रक्तचन्दनरक्ताक्षत-रक्तकुसुमैर्बदरीदूर्व्वादियुक्तं जलं गृहीत्वा।

ॐ ह्रीं हंसः शुचिषद्वसुरन्तरीक्षसद्धोतावेदिषदतिथिर्दुरोणसत्।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्॥

इति मन्त्रं पठित्वा मार्त्तण्डभैरवाय एषोऽर्घः स्वाहा। इत्यर्घः।

अथ द्वारपालपूजा।

सामान्यार्घजलेनैव द्वारपालान् प्रपूजयेत्।

ॐ गणेशाय नमः। ॐ बटुकाय नमः। ॐ क्षेत्रपालाय नमः। ॐ योगिन्यै नमः। ॐ गङ्गायै नमः। ॐ यमुनायै नमः। ॐ श्रियै नमः। ॐ सरस्वत्यै नमः। ॐ धात्रे नमः। ॐ विधात्रे नमः। ॐ शङ्खाय नमः। ॐ पद्मनिधये नमः। ॐ मातङ्गै नमः। ॐ ईश्वरमातङ्गै नमः। ॐ देहल्यै नमः।

एभिर्मन्त्रैर्द्वारपालदेवता गन्धपुष्पैः पूजयेत्।

यथोक्तम् ।

गणेशं वटुकं चैव क्षेत्रपालं च योगिनीम् ।
गङ्गां च यमुनां चैव श्रियं चैव सरस्वतीम् ॥ १ ॥
धात्रीं चैव विधात्रीं च शङ्खपद्मनिधिं तथा ।
मातङ्गीश्वरमातङ्गौ देहलीं परिपूजयेत् ॥ २ ॥

इति द्वारपालपूजा समाप्ता ।

## अथ घण्टावादनम् ।

गत्वा पूजास्थलं मन्त्री कांस्यघण्टां प्रवादयेत् ।
गजध्वनिमातः स्वाहा इति घण्टां संपूज्य वामेन घण्टां प्रवादयेत् ।

## घण्टावादने समयनियमः ।

सविन्दुमातृकान्यासं यावदुच्चरितं भवेत् ।
तावत्कालं तु देवेशि घण्टानादं तु कारयेत् ॥ १ ॥
आद्ये धूपे च दीपे च नैवेद्ये शङ्खशोधने ।
स्नाने नीराजने चैव सप्त घण्टाः प्रकीर्त्तिताः ॥ २ ॥

## अथ विघ्नोत्सारणम् ।

ततश्चाक्षतसिद्धार्थान् गृहीत्वा प्रपठेद्द्विजः ।
अपसर्पन्तु ते भूताः ये भूता भूमिसंस्थिताः ।
ये भूता विघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञया ॥ १ ॥
वेतालाश्च पिशाचाश्च राक्षसाश्च सरीसृपाः ।
अपसर्पन्तु ते सर्व्वे पूजाकर्म्म करोम्यहम् ॥ २ ॥

इति पठित्वा वामपादघातत्रयेण भूमिष्ठान् विघ्नानिःसार्य पृथिवीं प्रार्थयेत् ।

पृथ्वीप्रार्थना अर्घश्च।

वसुधे हेमगर्भासि शेषस्योपरि शायिनि।
पूजार्थं देहि मे स्थानं गृहाणार्घं धरित्रि मे ॥ १ ॥

अर्घं दत्त्वा भैरवं प्रार्थयेत्।

भैरवप्रार्थना।

तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम।
भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ॥ १ ॥

इत्यनुज्ञां गृहीत्वा आसनमुपविशेत्।

ततः आसनोपवेशने पृथ्वीपूजनम्।

ॐ आधारशक्तये नमः। ॐ प्रकृत्यै नमः। ॐ कूर्म्माय नमः। ॐ अनन्ताय नमः। ॐ पृथिव्यै नमः।

इति गन्धपुष्पाभ्यां सम्पूज्य।

आसनशुद्धिकरणमन्त्रः।

ॐ आसनमन्त्रस्य मेरुपृष्ठ ऋषिः सुतलं छन्दः श्रीकूर्म्मो देवता आसनग्रहणे विनियोगः।

ॐ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता।
त्वं च धारय मां नित्यं पवित्रं कुरु चासनम् ॥ १ ॥

ॐ आत्मासने कमलासनाय नमः।

अथ दिव्यभौमविघ्नोत्सारणम्।

अपसर्पन्तु ते भूताः ये भूता भूमिसंस्थिताः।
ये भूता विघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञया ॥ १ ॥

इति पठित्वा चतुर्दिक्षु तण्डुलान्विकीर्य्य पुष्पं क्षिपेत्। उपरि निर्निमेषं दृष्ट्वा दिव्यविघ्नानुत्सार्य्य पार्ष्णिप्रहारेण भौमविघ्नानुत्सारयेत्। पद्मासने स्वस्तिकासने वा उपविश्याञ्जलिं बद्ध्वा।

[स्वस्तिकासनलक्षणम्।

निधायाङ्गुष्ठयुगलं जान्वोरुपरि संहतम्।

ऋजुकायो विशेन्मन्त्री स्वस्तिकं तत्प्रचक्षते ॥ १ ॥]

वामे—ॐ गुरुभ्यो नमः। ॐ परमगुरुभ्यो नमः। ॐ परापरगुरुभ्यो नमः। ॐ परमेष्ठिगुरुभ्यो नमः। दक्षिणे—ॐ गणेशाय नमः। अग्रे—ॐ दुर्गायै नमः। पृष्ठे—ॐ क्षेत्रपालाय नमः।

इति नमस्कृत्य ॐ नमः सुदर्शनाय अस्त्राय फड़िति करौ संशोध्य तेनैवाधोमध्योर्द्धक्रमेण तालत्रयं दिग्बन्धनञ्च कुर्य्यात्। छोटिकया दश दिशो बध्नीयात्।

दशदिग्बन्धनमाह।

ॐ ऐन्द्रीं दिशं चक्रेण बध्नामि नमश्चक्राय स्वाहा। ॐ आग्नेयीं दिशं चक्रेण बध्नामि नमश्चक्राय स्वाहा। ॐ याम्यां दिशं चक्रेण बध्नामि नमश्चक्राय स्वाहा। ॐ नैर्ऋतीं दिशं चक्रेण बध्नामि नमश्चक्राय स्वाहा। ॐ वारुणीं दिशं चक्रेण बध्नामि नमश्चक्राय स्वाहा। ॐ वायवीं दिशं चक्रेण बध्नामि नमश्चक्राय स्वाहा। ॐ कौवेरीं दिशं चक्रेण बध्नामि नमश्चक्राय स्वाहा। ॐ ऐशानीं दिशं चक्रेण बध्नामि नमश्चक्राय स्वाहा। ॐ ऊर्द्धां दिशं चक्रेण बध्नामि नमश्चक्राय स्वाहा। ॐ अधोदिशं चक्रेण बध्नामि नमश्चक्राय स्वाहा।

एवं दशदिशो बद्ध्वा ततो वक्ष्यमाणमन्त्रैर्देवतां नमस्कुर्य्यात्।

पूर्व्वे—इन्द्रम्। ॐ इन्द्राय सुराधिपतये गजारूढ़ाय वज्रहस्ताय सपरिवाराय नमः॥ १ ॥

आग्नेय्यामग्निम्। ॐ अग्नये तेजोऽधिपतये मेषारूढ़ाय कपिलवर्णाय शक्तिहस्ताय सपरिवाराय नमः ॥ २ ॥

दक्षिणे यमम्। ॐ यमाय प्रेताधिपतये महिषारूढ़ाय नीलवर्णाय दण्डहस्ताय सपरिवाराय नमः ॥ ३ ॥

नैर्ऋत्यां नैर्ऋतम्। ॐ नैर्ऋताय रक्षोऽधिपतये प्रेतारूढ़ाय श्यामवर्णाय खड्गहस्ताय सपरिवाराय नमः ॥ ४ ॥

पश्चिमे वरुणम्। ॐ वरुणाय जलाधिपतये मकरवाहनाय श्वेतवर्णाय पाशहस्ताय सपरिवाराय नमः ॥ ५ ॥

वायव्यां वायुम्। ॐ वायवे प्राणाधिपतये मृगारूढ़ाय धूम्रवर्णाय अङ्कुशहस्ताय सपरिवाराय नमः ॥ ६ ॥

उत्तरे कुवेरम्। ॐ कुवेराय यक्षाधिपतये अश्वारूढ़ाय शुक्लवर्णाय गदाहस्ताय सपरिवाराय नमः ॥ ७ ॥

ऐशान्यामीशानम्। ॐ ईशानाय सर्व्वविद्याधिपतये वृषारूढ़ाय शुक्लवर्णाय शूलहस्ताय सपरिवाराय नमः ॥ ८ ॥

ऊर्द्ध्वं ब्रह्माणम्। ॐ ब्रह्मणे सर्व्वलोकाधिपतये हंसवाहनाय रक्तवर्णाय कमण्डलुहस्ताय सपरिवाराय नमः ॥ ९ ॥

अधोऽनन्तम्। ॐ अनन्ताय सर्व्वनागाधिपतये कूर्म्मारूढ़ाय शुक्लवर्णाय चक्रहस्ताय सपरिवाराय नमः ॥ १० ॥

ततः प्रार्थना।

इन्द्रो मां पातु दिक्पूर्व्वे आग्नेये अग्निदेवता।
याम्ये यमः सदा पातु नैर्ऋत्यां नैर्ऋतः प्रभुः ॥ १ ॥
पश्चिमे वरुणः पातु वायव्ये वायुदेवता।
उत्तरे धनदः पातु ऐशान्यामीश्वरः प्रभुः ॥ २ ॥

ऊर्द्ध्वे पितामहः पातु अधोऽनन्तो विभुः सदा ।
एवं दश दिशो रक्षां कुर्व्वन्तु देवतागणाः ।
चिन्तयित्वाग्निशालां वै भूतशुद्धिं समाचरेत् ॥ ३ ॥

इत्यासनशुद्धिः ।

## अथ भूतशुद्धिः ।

वामहस्तमथोत्तानमधो दक्षिणवन्दितम् ।
करकच्छपिका मुद्रा भूतशुद्धौ प्रकीर्त्तिता ॥ १ ॥

ॐ आनन्दकन्दसम्भवं ज्ञाननालम् ऐश्वर्य्याष्टदलं वैराग्यकर्णिकाकारं प्रणवेन प्रकाशितं हृत्कमलं ध्यात्वा तत्कर्णिकायां प्रदीपशिखाकारं जीवात्मानं विचिन्त्य सुषुम्नामार्गेण हंस इति मन्त्रेण तं सहस्रदलकमलस्थिते परमात्मनि योजयेत् ।

ॐ भूतशुद्धिमन्त्रस्य शरीरात्मा ऋषिः पुरुषः प्रकृतिश्छन्दः सत्यो देवता पुरुषो वीजं प्रकृतिः शक्तिः भूतशुद्ध्यर्थे विनियोगः ।

ॐ भूरग्न्यात्मने अङ्गुष्ठाभ्यां नमः । ॐ भुवः प्रजापत्यात्मने तर्ज्जनीभ्यां स्वाहा । ॐ स्वः सत्यात्मने मध्यमाभ्यां वषट् । ॐ महः पृथिव्यात्मने अनामिकाभ्यां हूं । ॐ जनः ब्रह्मणे सूर्य्यात्मने कनिष्ठाभ्यां वौषट् । ॐ तपः वाय्वात्मने करतलकरपृष्ठाभ्यां फट् ।

एवञ्चाङ्गन्यासः । अस्त्राय फडिति विशेषः ।

### अथ ध्यानम् ।

गमागमस्थं गमनादिशून्यमचिन्त्यरूपं परमं पवित्रम् ।
पश्यन्ति तं सर्व्वजनान्तरस्थं नमामि हंसं परमात्मरूपम् ॥ १ ॥

आकाशवायुतेजोजलपृथिवीश्रोत्रत्वक्‌चक्षूरसनाघ्राणमुखपाणिपादपायूपस्थशब्दस्पर्शरूपरसगन्धवचनादानगतिविसर्गानन्दा-

स्वरूपपञ्चविंशतितत्त्वानि व्युत्क्रमाद्वीजभावेन तत्र लीनानि विचिन्तयेत्।

ततः पापपुरुषं ध्यायेत्।

वामकुक्षिस्थितं पापं पुरुषं कज्जलप्रभम्।
ब्रह्महत्याशिरस्कञ्च स्वर्णस्तेयभुजद्वयम्।
सुरापानहृदायुक्तं गुरुतल्पकटीद्वयम् ॥ १ ॥
तत्संसर्गिपदद्वन्द्वमङ्गप्रत्यङ्गपातकम्।
उपपातकरोमाणं रक्तश्मश्रुविलोचनम् ॥ २ ॥
अङ्गुष्ठमात्रं पुरुषं दुराचारं दुरासदम्।
खड्गचर्म्मधरं क्रुद्धमित्थं पापं विचिन्तयेत् ॥ ३ ॥

अथ शोषणादिकं कुर्य्यात्।

ॐ यमिति वायुबीजस्य पुलस्त्य ऋषिः पङ्क्तिश्छन्दः पवनो देवता पापयुक्तशरीरशोषणे विनियोगः।

ततः षड्विन्दुलाञ्छितं वृत्तमण्डलमध्यस्थं धूम्रवर्णं यमिति वायुबीजं वामनासारन्ध्रेण सञ्चिन्त्य द्वात्रिंशद्वारं जपन् पूरकेण इड़ानाड्या: नाभिमण्डलं नीत्वा तस्य चतुःषष्टिवारं जपन् कुम्भकं कुर्व्वन् तदुद्भूतवायुना सदोषं शरीरं शोषयित्वा षोड़शवारं जपन् दक्षिणनासारन्ध्रेण रेचयेत्।

ॐ रमिति अग्निबीजस्य काश्यप ऋषिः त्रिष्टुप् छन्दः अग्निर्देवता पापयुक्तशरीरदहने विनियोगः।

ततो दक्षिणनासारन्ध्रेण रं इत्यग्निबीजं स्वस्तिकोपेतं त्रिकोणमण्डलमध्यस्थं लीनमारुतं स्फुलिङ्गाकारं रक्तवर्णं विचिन्त्य द्वात्रिंशद्वारं जपन् पूरकेण पिङ्गलानाड्या: हृदयमध्यं नीत्वा तस्य चतुःषष्टिवारं जपन् कुम्भकं कुर्व्वन् वीजोत्पन्नवह्निना सदोषं

शरीरं दग्धं विचिन्त्य वामनासारन्ध्रेण भस्मसहितं वायुं षोड़श-वारं जपन् रेचयेत् ।

ॐ वमिति वरुणवीजस्य ब्रह्मा ऋषिः गायत्रीच्छन्दः वरुणो देवता पापयुक्तशरीरप्लावने विनियोगः ।

ततो वामनासारन्ध्रेण ठं इति चन्द्रवीजं शुक्लमर्द्धचन्द्रोपेतं पङ्कजरूपं तोयमण्डलमध्यस्थं विचिन्त्यामृतेनैक्यं विभाव्य वं इति वरुणवीजं द्वात्रिंशद्वारं जपन् पूरकं कुर्व्वन् ठं इति चन्द्रवीजं द्वात्रिंशद्वारं जपन् ललाटचन्द्रं नीत्वा तस्य चतुःषष्टिवारं जपन् कुम्भकं कुर्व्वन् तस्माद्गलितसुधाधारया मातृकामय्या मूर्द्धादि-पादान्तं दिव्यं शरीरमुत्पाद्यामृतेनाप्लाव्य षोड़शवारं जपन् दक्षिणनासारन्ध्रेण रेचकं कुर्य्यात् ।

ततो वर्णमयीममृतधारामाश्राव्य तया धारया सृष्ट्युत्पत्ति-क्रमेण पञ्चाशद्वर्णघटितं शरीरमुत्पाद्य पृथिव्यादिमहाभूतानि संयोज्य द्वादशान्तपदात्मानं सोऽहमिति मन्त्रेणानीयेष्टदेवता-तोऽभिन्नमात्मानं चिन्तयेत् ।

ततो मन्त्री स्वकं देहं ध्यायेद्देवस्वरूपकमिति ।

अथ ध्यानमाह ।

फुल्लारविन्दवदनं पीतनिर्म्मलवाससम् ।
पङ्कजासनमध्यस्थं शुद्धं जाम्बूनदप्रभम् ॥ १ ॥
केयूरकटकोपेतं हारकुण्डलमण्डितम् ।
शङ्खचक्रधरं स्मेरं मुकुटोज्ज्वलभूषितम् ।
सोऽहमस्मीत्यभेदेन चिन्तयित्वात्मपूजनम् ॥ २ ॥

इति भूतशुद्धिः ॥

भूतशुद्धिं विधायेत्थं प्राणस्थापनमाचरेत् ।

अथ प्राणप्रतिष्ठापनम्।

ॐ प्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वराः ऋषयः ऋग्यजुः-सामाथर्व्वाणि छन्दांसि चैतन्यरूपा प्राणशक्तिर्देवता ॐ आं वीजं ह्रीं शक्तिः क्रौं कीलकं मम प्राणप्रतिष्ठापने विनियोगः।

ॐ अं कं खं गं घं ङं आं पृथिव्यप्तेजोवाय्वाकाशात्मने अङ्गुष्ठाभ्यां नमः। ॐ इं चं छं जं झं ञं ईं शब्दस्पर्शरूपरस-गन्धात्मने तर्ज्जनीभ्यां स्वाहा। ॐ उं टं ठं डं ढं णं ऊं श्रोत्रत्वक्-चक्षुर्जिह्वाघ्राणात्मने मध्यमाभ्यां वषट्। ॐ एं तं थं दं धं नं ऐं वाक्पाणिपादपायूपस्थात्मने अनामिकाभ्यां हूं। ॐ ओं पं फं बं भं मं औं वचनादानगतिविसर्गानन्दात्मने कनिष्ठिकाभ्यां वौषट्। ॐ अं यं रं लं वं शं षं सं हं लं क्षं मनोबुद्ध्यहङ्कार-चिन्तात्मने करतलकरपृष्ठाभ्यां फट्।

एवमङ्गन्यासः। अस्त्राय फड़िति विशेषः।

ध्यानम्।

रक्ताम्बिपोतारुणमध्यसंस्थां पाशाङ्कुशेष्वासशरासिवाणान्।
शूलं कपालं दधतीं कराब्जैः रक्तां त्रिनेत्रां प्रणमामि देवीम्॥ १॥

ॐ आं नमः नाभेरधः। ॐ क्रौं आं नमः मस्तकाद्धृदये। ॐ यं त्वगात्मने नमः हृदि। ॐ रं असृगात्मने नमः दोर्मूले। ॐ लं मांसात्मने नमः ककुदि। ॐ वं मेदात्मने नमः कुक्षौ। ॐ शं अस्थ्यात्मने नमः हृदादिपाणियुगले। ॐ षं मज्जात्मने नमः हृदादिपादयुगले। ॐ सं शुक्रात्मने नमः जठरे। ॐ हं प्राणात्मने नमः आनने। ॐ लं जीवात्मने नमः हृदि। ॐ क्षं शक्त्यात्मने नमः आनने।

गन्धपुष्पं गृहीत्वा स्वहृदयं स्पृष्ट्वा ले[illegible]या मुद्रया प्राण-

शरीरं दग्धं विचिन्त्य वामनासारन्ध्रेण भस्मसहितं वायुं षोड़श-वारं जपन् रेचयेत् ।

ॐ वमिति वरुणवीजस्य ब्रह्मा ऋषिः गायत्रीच्छन्दः वरुणो देवता पापयुक्तशरीरप्लावने विनियोगः ।

ततो वामनासारन्ध्रेण ठं इति चन्द्रवीजं शुक्लमर्द्धचन्द्रोपेतं पङ्कजरूपं तोयमण्डलमध्यस्थं विचिन्त्यामृतेनैक्यं विभाव्य वं इति वरुणवीजं द्वात्रिंशद्वारं जपन् पूरकं कुर्व्वन् ठं इति चन्द्रवीजं द्वात्रिंशद्वारं जपन् ललाटचन्द्रं नीत्वा तस्य चतुःषष्टिवारं जपन् कुम्भकं कुर्व्वन् तस्माद्गलितसुधाधारया मातृकामय्या मूर्द्धादि-पादान्तं दिव्यं शरीरमुत्पाद्यामृतेनाप्लाव्य षोड़शवारं जपन् दक्षिणनासारन्ध्रेण रेचकं कुर्य्यात् ।

ततो वर्णमयीममृतधारामाश्राव्य तया धारया सृष्ट्युत्पत्ति-क्रमेण पञ्चाशद्वर्णघटितं शरीरमुत्पाद्य पृथिव्यादिमहाभूतानि संयोज्य द्वादशान्तपदात्मानं सोऽहमिति मन्त्रेणानीयेष्टदेवता-ततोऽभिन्नमात्मानं चिन्तयेत् ।

ततो मन्त्री स्वकं देहं ध्यायेद्देवस्वरूपकमिति ।

अथ ध्यानमाह ।

फुल्लारविन्दवदनं पीतनिर्म्मलवाससम् ।
पङ्कजासनमध्यस्थं शुद्धं जाम्बूनदप्रभम् ॥ १ ॥
केयूरकटकोपेतं हारकुण्डलमण्डितम् ।
शङ्खचक्रधरं स्मेरं मुकुटोज्ज्वलभूषितम् ।
सोऽहमस्मीत्यभेदेन चिन्तयित्वात्मपूजनम् ॥ २ ॥

इति भूतशुद्धिः ॥

भूतशुद्धिं विधायेत्थं प्राणस्थापनमाचरेत् ।

शरीरं दग्धं विचिन्त्य वामनासारन्ध्रेण भस्मसहितं वायुं षोड़श-वारं जपन् रेचयेत् ।

ॐ वमिति वरुणवीजस्य ब्रह्मा ऋषिः गायत्रीच्छन्दः वरुणो देवता पापयुक्तशरीरप्लावने विनियोगः ।

ततो वामनासारन्ध्रेण ठं इति चन्द्रवीजं शुक्लमर्द्धचन्द्रोपेतं पङ्कजरूपं तोयमण्डलमध्यस्थं विचिन्त्यामृतेनैक्यं विभाव्य वं इति वरुणवीजं द्वात्रिंशद्वारं जपन् पूरकं कुर्व्वन् ठं इति चन्द्रवीजं द्वात्रिंशद्वारं जपन् ललाटचन्द्रं नीत्वा तस्य चतुःषष्टिवारं जपन् कुम्भकं कुर्व्वन् तस्माद्गलितसुधाधारया मातृकामय्या मूर्द्धादि-पादान्तं दिव्यं शरीरमुत्पाद्यामृतेनाप्लाव्य षोड़शवारं जपन् दक्षिणनासारन्ध्रेण रेचकं कुर्य्यात् ।

ततो वर्णमयीममृतधारामाश्राव्य तया धारया सृष्ट्युत्पत्ति-क्रमेण पञ्चाशद्वर्णघटितं शरीरमुत्पाद्य पृथिव्यादिमहाभूतानि संयोज्य द्वादशान्तपदात्मानं सोऽहमिति मन्त्रेणानीयेष्टदेवतां ततोऽभिन्नमात्मानं चिन्तयेत् ।

ततो मन्त्री स्वकं देहं ध्यायेद्देवस्वरूपकमिति ।

अथ ध्यानमाह ।

फुल्लारविन्दवदनं पीतनिर्म्मलवाससम् ।
पङ्कजासनमध्यस्थं शुद्धं जाम्बूनदप्रभम् ॥ १ ॥
केयूरकटकोपेतं हारकुण्डलमण्डितम् ।
शङ्खचक्रधरं स्मेरं मुकुटोज्ज्वलभूषितम् ।
सोऽहमस्मीत्यभेदेन चिन्तयित्वात्मपूजनम् ॥ २ ॥

इति भूतशुद्धिः ॥

भूतशुद्धिं विधायेत्थं प्राणस्थापनमाचरेत् ।

## अथ प्राणप्रतिष्ठापनम्।

ॐ प्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वराः ऋषयः ऋग्यजुः-सामाथर्व्वाणि छन्दांसि चैतन्यरूपा प्राणशक्तिर्देवता ॐ आं वीजं ह्रीं शक्तिः क्रौं कीलकं मम प्राणप्रतिष्ठापने विनियोगः।

ॐ अं कं खं गं घं ङं आं पृथिव्यप्तेजोवाय्वाकाशात्मने अङ्गुष्ठाभ्यां नमः। ॐ इं चं छं जं झं ञं ईं शब्दस्पर्शरूपरस-गन्धात्मने तर्ज्जनीभ्यां स्वाहा। ॐ उं टं ठं डं ढं णं ऊं श्रोत्रत्वक्-चक्षुर्जिह्वाघ्राणात्मने मध्यमाभ्यां वषट्। ॐ एं तं थं दं धं नं ऐं वाक्पाणिपादपायूपस्थात्मने अनामिकाभ्यां हूं। ॐ ओं पं फं बं भं मं औं वचनादानगतिविसर्गानन्दात्मने कनिष्ठिकाभ्यां वौषट्। ॐ अं यं रं लं वं शं षं सं हं ळं क्षं मनोबुद्ध्यहङ्कार-चिन्तात्मने करतलकरपृष्ठाभ्यां फट्।

एवमङ्गन्यासः। अस्त्राय फडिति विशेषः।

### ध्यानम्।

रक्ताब्धिपोतारुणमध्यसंस्थां पाशाङ्कुशेष्वासशरासिवाणान्।
शूलं कपालं दधतीं कराब्जैः रक्तां त्रिनेत्रां प्रणमामि देवीम्॥ १॥

ॐ आं नमः नाभेरधः। ॐ क्रौं आं नमः मस्तकाद्धृदये। ॐ यं त्वगात्मने नमः हृदि। ॐ रं असृगात्मने नमः दोर्मूले। ॐ लं मांसात्मने नमः ककुदि। ॐ वं मेदात्मने नमः कुक्षौ। ॐ शं अस्थ्यात्मने नमः हृदादिपाणियुगले। ॐ षं मज्जात्मने नमः हृदादिपादयुगले। ॐ सं शुक्रात्मने नमः जठरे। ॐ हं प्राणात्मने नमः आनने। ॐ लं जीवात्मने नमः हृदि। ॐ क्षं शक्त्यात्मने नमः आनने।

गन्धपुष्पं गृहीत्वा स्वहृदयं स्पृष्ट्वा लेलिहया मुद्रया प्राण-

प्रतिष्ठां कुर्य्यात् । यथा—ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हौं ॐ क्षं सं हंसः ह्रीं ॐ हंसः मम प्राणा इह प्राणाः । ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हौं ॐ क्षं सं हंसः ह्रीं ॐ हंसः मम जीव इह स्थितः । ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हौं ॐ क्षं सं हंसः ह्रीं ॐ हंसः मम सर्व्वेन्द्रियाणीह स्थितानि । ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हौं ॐ क्षं सं हंसः ह्रीं ॐ हंसः मम वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा ।

एवं पुनर्व्वारद्वयम् । देवपक्षे मम स्थाने अमुकदेवस्य प्राणा इह प्राणाः इति योज्यम् ।

इति प्राणप्रतिष्ठापनमन्त्रः ।

करशुद्धिं ततः कुर्य्यात्करयोर्लिप्तगन्धयोः ।
गर्भस्थपुष्पयोरस्त्रमन्त्रेणान्योऽन्यघर्षणात् ॥ १ ॥

प्रणवेन प्राणायामं कुर्य्यात् ।

रेचः षोड़शमात्राभिः पूरो द्वात्रिंशता भवेत् ।
चतुःषष्ट्या भवेत्कुम्भ एवं प्रणवसंयमः ॥ १ ॥

इति प्रणवः ।

## षड्विधप्राणायामलक्षणम् ।

सधूमश्चाप्यधूमश्च सगर्भश्चाप्यगर्भकः ।
सलक्षश्चाप्यलक्षश्च प्राणायामस्तु षड्विधः ॥ १ ॥
सधूमः श्वाससंयुक्तः अधूमः श्वासवर्ज्जितः ।
सगर्भो जपसंयुक्तो ह्यगर्भो जपवर्ज्जितः ॥ २ ॥ इति ।
ततः प्रणवमन्त्रस्य ऋष्यादिन्यासमाचरेत् ।

अथ प्रणवन्यासः।

ॐ प्रणवमन्त्रस्य प्रजापति ऋषिर्गायत्री च्छन्दः परमात्मा देवता अकारो वीजं उकारः शक्तिः मकारः कीलकं प्राणायामे विनियोगः।

ॐ अं ॐ आं अङ्गुष्ठाभ्यां नमः। ॐ इं ॐ ईं तर्ज्जनीभ्यां स्वाहा। ॐ उं ॐ ऊं मध्यमाभ्यां वषट्। ॐ एं ॐ ऐं अनामिकाभ्यां हूं। ॐ ओं ॐ औं कनिष्ठाभ्यां वौषट्। ॐ अं ॐ अः करतलकरपृष्ठाभ्यां फट्।

एवमङ्गन्यासः। अस्त्राय फड़िति विशेषः।

ध्यानम्।

ॐ विष्णुं भास्वत्किरीटाङ्गदवलयगलाकल्पहारोदराङ्घ्रि-
श्रोणीभूषं सवक्षोमणिमकरमहाकुण्डलैर्मण्डिताङ्गम्।
हस्तोद्यच्चक्रशङ्खाम्बुजगदममलं पीतकौशेयवासं
विद्योतद्भासमुद्यद्दिनकरसदृशं पद्मसंस्थं नमामि ॥ १ ॥

इति ध्यानम्।

प्राणायामविशुद्धात्मा मातृकान्यासमाचरेत्।

अथ मातृकान्यासः।

मातृका द्विविधा प्रोक्ता परा चैवापरा तथा।
सुषुम्नान्ता परा न्यस्ताप्यपरा वाह्यदेशतः।
ततोऽन्तर्मातृकां न्यस्य पश्चात्प्रत्यक्षरं न्यसेत् ॥ १ ॥

ॐ मातृकामन्त्रस्य ब्रह्मा ऋषिः गायत्री च्छन्दः अन्तर्मातृका सरस्वती देवता अन्तर्मातृकान्यासे विनियोगः।

ॐ अं कं खं गं घं ङं आं अङ्गुष्ठाभ्यां नमः। ॐ इं चं छं जं झं ञं ईं तर्ज्जनीभ्यां स्वाहा। ॐ [illegible] डं ढं णं तं थं दं धं नं

यं फं जं मध्यमाभ्यां वषट् । ॐ एं कं खं गं घं ङं चं छं जं झं ञं टं ठं ऐं अनामिकाभ्यां हूं । ॐ ओं अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं कनिष्ठाभ्यां वौषट् । ॐ अं हं लं क्षं अः करतलकरपृष्ठाभ्यां फट् ।

एवमङ्गन्यासः । अस्त्राय फड़िति विशेषः ।

ध्यानम् ।

वर्णवर्णाम्बुजां मालां भारतीं भरलोचनाम् ।
ज्ञानसिंहासनारूढ़ां वन्देऽहं मातृकां सदा ॥ १ ॥

सूत्रमाह ।

आधारे लिङ्गनाभौ तदुपरि हृदये कण्ठदेशे ललाटे
द्वे पत्रे षोड़शारे द्विदशदशदले द्वादशार्द्धे चतुष्के ।
वासान्ते वालमध्ये डफकठसहिते कण्ठदेशे स्वराणां
हं क्षं तत्त्वार्थयुक्तं सकलदलगतं वर्णरूपं नमामि ॥ १ ॥

आधारपद्मे चतुर्दले पूर्व्वादिक्रमेण । ॐ वं नमः ॐ शं नमः ॐ षं नमः ॐ सं नमः । लिङ्गपद्मे षड्दले पूर्व्वादिक्रमेण । ॐ बं नमः ॐ भं नमः ॐ मं नमः ॐ यं नमः ॐ रं नमः ॐ लं नमः । नाभिपद्मे दशदले पूर्व्वादिक्रमेण । ॐ डं नमः ॐ ढं नमः ॐ णं नमः ॐ तं नमः ॐ थं नमः ॐ दं नमः ॐ धं नमः ॐ नं नमः ॐ पं नमः ॐ फं नमः । हृदयपद्मे द्वादशदले पूर्व्वादिक्रमेण । ॐ कं नमः ॐ खं नमः ॐ गं नमः ॐ घं नमः ॐ ङं नमः ॐ चं नमः ॐ छं नमः ॐ जं नमः ॐ झं नमः ॐ ञं नमः ॐ टं नमः ॐ ठं नमः । कण्ठपद्मे षोड़शदले पूर्व्वादिक्रमेण । ॐ अं नमः ॐ आं नमः ॐ इं नमः ॐ ईं नमः ॐ उं नमः ॐ ऊं नमः ॐ ऋं नमः ॐ ॠं नमः ॐ ॡं नमः

ॐ लृं नमः ॐ एं नमः ॐ ऐं नमः ॐ ओं नमः ॐ औं नमः ॐ अं नमः ॐ अः नमः । ललाटपद्मे द्विदले । ॐ हं नमः ॐ क्षं नमः । ॐ नमः सहस्रदले । इत्यन्तर्मातृका ।

अथ वहिर्मातृकाञ्च न्यसेत् ।

ॐ मातृकान्यासमन्त्रस्य ब्रह्मा ऋषिः गायत्री छन्दः मातृका-सरस्वती देवता हलो वीजं स्वराः शक्तयः मातृकान्यासे विनियोगः ।

ॐ अं कं खं गं घं ङं आं अङ्गुष्ठाभ्यां नमः । ॐ इं चं छं जं झं ञं ईं तर्ज्जनीभ्यां स्वाहा । ॐ उं टं ठं डं ढं णं ऊं मध्यमाभ्यां वषट् । ॐ एं तं थं दं धं नं ऐं अनामिकाभ्यां हूं । ॐ ओं पं फं बं भं मं औं कनिष्ठाभ्यां वौषट् । ॐ अं यं रं लं वं शं षं सं हं लं क्षं अः करतलकरपृष्ठाभ्यां फट् ।

एवमङ्गन्यासः । अस्त्राय फडिति विशेषः ।

ध्यानम् ।

पञ्चाशद्वर्णभेदैर्व्विहितवदनदोःपादयुक्कुक्षिवक्षो-
देहां भास्वत्कपर्द्दां कलितशशिकलामिन्दुकुन्दावदाताम् ।
अक्षस्रक्कुम्भचिन्तां लिखितवरकरां त्रीक्षणां पद्मसंस्थां
मस्ताकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि ॥ १ ॥

सूत्रमाह ।

शिरोवदनवृत्ताक्षिश्रुतिघ्राणेषु गण्डयोः ।
ओष्ठदन्तोत्तमाङ्गास्ये दोःपत्सन्ध्यग्रकेषु च ॥ १ ॥
पार्श्वयोः पृष्ठतो नाभौ जठरे हृदयांसके ।
ककुदंसे च हृत्पूर्व्वं पाणिपादयुगे तथा ।
जठराननयोश्चैव अक्षराणि क्रमान्न्यसेत् ॥ २ ॥

ॐ अं नमः शिरसि। ॐ आं नमः मुखवृत्ते। ॐ इं नमः दक्षिणनेत्रे। ॐ ईं नमः वामनेत्रे। ॐ उं नमः दक्षिणकर्णे। ॐ ऊं नमः वामकर्णे। ॐ ऋं नमः दक्षिणनासापुटे। ॐ ॠं नमः वामनासापुटे। ॐ ऌं नमः दक्षिणगण्डे। ॐ ॡं नमः वामगण्डे। ॐ एं नमः ऊर्द्ध्वोष्ठे। ॐ ऐं नमः अधरोष्ठे। ॐ ओं नमः ऊर्द्ध्वदन्तपङ्क्तौ। ॐ औं नमः अधोदन्तपङ्क्तौ। ॐ अं नमः शिरसि। ॐ अः नमः मुखे।

ॐ कं नमः दक्षिणबाहुमूले। ॐ खं नमः दक्षिणकूर्परे। ॐ गं नमः दक्षिणमणिबन्धे। ॐ घं नमः दक्षिणकराङ्गुलिमूले। ॐ ङं नमः दक्षिणकराङ्गुल्यग्रे। ॐ चं नमः वामबाहुमूले। ॐ छं नमः वामकूर्परे। ॐ जं नमः वाममणिबन्धे। ॐ झं नमः वामकराङ्गुलिमूले। ॐ ञं नमः वामकराङ्गुल्यग्रे। ॐ टं नमः दक्षिणपादस्योरुमूले। ॐ ठं नमः दक्षिणजानुनि। ॐ डं नमः दक्षिणगुल्फे। ॐ ढं नमः दक्षिणपादे। ॐ णं नमः दक्षिणपादाङ्गुल्यग्रे। ॐ तं नमः वामपादस्योरुमूले। ॐ थं नमः वामजानुनि। ॐ दं नमः वामगुल्फे। ॐ धं नमः वामपादे। ॐ नं नमः वामपादाङ्गुल्यग्रे। ॐ पं नमः दक्षिणपार्श्वे। ॐ फं नमः वामपार्श्वे। ॐ बं नमः पृष्ठे। ॐ भं नमः नाभौ। ॐ मं नमः जठरे। ॐ यं नमः हृदये। ॐ रं नमः दक्षिणांसे। ॐ लं नमः ककुदि। ॐ वं नमः वामांसे। ॐ शं नमः हृदादिदक्षिणहस्तपर्य्यन्तम्। ॐ षं नमः हृदादिवामहस्तपर्य्यन्तम्। ॐ सं नमः हृदादिदक्षिणपादपर्य्यन्तम्। ॐ हं नमः हृदादिवामपादपर्य्यन्तम्। ॐ लं नमः हृदादिजठरपर्य्यन्तम्। ॐ क्षं नमः हृदादिमुखपर्य्यन्तम्। इति मातृकान्यासः।

अथ केशवादिन्यासः ।

ॐ केशवादिन्यासस्य दक्षप्रजापतिर्ऋषिः गायत्री छन्दः लक्ष्मीनारायणौ देवते श्रीं वीजं स्वाहा शक्तिः केशवप्रीत्यर्थं विनियोगः ।

ॐ आं अङ्गुष्ठाभ्यां नमः । ॐ श्रीं तर्ज्जनीभ्यां स्वाहा । ॐ श्रूं मध्यमाभ्यां वषट् । ॐ श्रैं अनामिकाभ्यां हूं । ॐ श्रौं कनिष्ठाभ्यां वौषट् । ॐ श्रः करतलकरपृष्ठाभ्यां फट् ।

एवमङ्गन्यासः । अस्त्राय फड़िति विशेषः ।

ध्यानम् ।

उद्यत्प्रद्योतनशतरुचिं तप्तहेमावदातं
पार्श्वद्वन्द्वे जलधिसुतया विश्वधात्र्या च जुष्टम् ।
नानारत्नोल्लसितविविधाकल्पमापीतवस्त्रं
विष्णुं वन्दे दरकमलकौमोदकीचक्रपाणिम् ॥ १ ॥

मातृकान्यासस्थाने केशवादिन्यासं कुर्य्यात् । यथा—ॐ अं श्रीं केशवाय कीर्त्त्यै नमः शिरसि । ॐ आं नारायणाय कान्त्यै नमः मुखवृत्ते । ॐ इं माधवाय तुष्ट्यै नमः दक्षिणनेत्रे । ॐ ईं गोविन्दाय पुष्ट्यै नमः वामनेत्रे । ॐ उं विष्णवे धृत्यै नमः दक्षिणकर्णे । ॐ ऊं मधुसूदनाय शान्त्यै नमः वामकर्णे । ॐ ऋं त्रिविक्रमाय क्रियायै नमः दक्षिणनासापुटे । ॐ ॠं वामनाय दयायै नमः वामनासापुटे । ॐ ऌं श्रीधराय मेधायै नमः दक्षिणगण्डे । ॐ ॡं हृषीकेशाय हर्षायै नमः वामगण्डे । ॐ एं पद्मनाभाय श्रद्धायै नमः ऊर्द्धौष्ठे । ॐ ऐं दामोदराय लज्जायै नमः अधरोष्ठे । ॐ ओं वासुदेवाय लक्ष्म्यै नमः ऊर्द्ध-दन्तपङ्क्तौ । ॐ औं सङ्कर्षणाय सरस्वत्यै नमः अधोदन्तपङ्क्तौ ।

ॐ अं प्रद्युम्नाय प्रीत्यै नमः शिरसि । ॐ अः अनिरुद्धाय रत्यै नमः मुखे ।

ॐ कं चक्रिणे जयायै नमः । ॐ खं गदिने दुर्गायै नमः । ॐ गं शार्ङ्गिणे प्रभायै नमः । ॐ घं खड्गिने सत्यायै नमः । ॐ ङं शङ्खिने चण्डायै नमः । एतद्दक्षिणहस्तसन्ध्यग्रेषु । ॐ चं हलिने वाण्यै नमः । ॐ छं मुषलिने विलासिन्यै नमः । ॐ जं शूलिने विजयायै नमः । ॐ झं पाशिने विरजायै नमः । ॐ ञं अङ्कुशिने विश्वायै नमः । एतद्वामहस्तसन्ध्यग्रेषु । ॐ टं मुकुन्दाय विनन्दायै नमः । ॐ ठं नन्दजाय सुनन्दायै नमः । ॐ डं नन्दिने स्मृत्यै नमः । ॐ ढं नराय ऋद्ध्यै नमः । ॐ णं नरकजिते समृद्ध्यै नमः । एतद्दक्षिणपादसन्ध्यग्रेषु । ॐ तं हरये शुद्ध्यै नमः । ॐ थं कृष्णाय बुद्ध्यै नमः । ॐ दं सत्याय भूत्यै नमः । ॐ धं सात्वताय मत्यै नमः । ॐ नं शौरये क्षमायै नमः । एतद्वामपादसन्ध्यग्रेषु । ॐ पं शूराय रमायै नमः दक्षिणपार्श्वे । ॐ फं जनार्द्दनाय उमायै नमः वामपार्श्वे । ॐ बं भूधराय क्लेदिन्यै नमः पृष्ठे । ॐ भं विश्वमूर्त्तये क्लिन्नायै नमः नाभौ । ॐ मं वैकुण्ठाय वसुदायै नमः जठरे । ॐ यं त्वगात्मने पुरुषोत्तमाय वसुधायै नमः हृदये । ॐ रं असृगात्मने बलिने परायै नमः दक्षिणांसे । ॐ लं मांसात्मने बलानुजाय परायणायै नमः ककुदि । ॐ वं मेदात्मने बलाय सूक्ष्मायै नमः वामांसे । ॐ शं अस्थ्यात्मने वृषघ्नाय सन्ध्यायै नमः हृदादिदक्षिणहस्ते । ॐ षं मज्जात्मने वृषाय प्रज्ञायै नमः हृदादिवामहस्ते । ॐ सं शुक्रात्मने हंसाय प्रभायै नमः हृदादिदक्षिणपादे । ॐ हं प्राणात्मने वराहाय निशायै नमः हृदादिवामपादे ।

ॐ लं शक्त्यात्मने विमलाय अमोघायै नमः हृदादिजठरे । ॐ ओं चं क्रोधात्मने नरसिंहाय विद्युतायै नमः हृदादिमुखे ।

इति केशवादिन्यासः ।

अथ भ्रमरन्यासः ।

ॐ भ्रमरन्यासस्य ब्रह्मा ऋषिः दैवी गायत्री छन्दः श्री-भ्रमरकृष्णो देवता भ्रमरन्यासे विनियोगः ।

ॐ क्रां अङ्गुष्ठाभ्यां नमः । ॐ क्रीं तर्ज्जनीभ्यां स्वाहा । ॐ क्रूं मध्यमाभ्यां वषट् । ॐ क्रैं अनामिकाभ्यां हूं । ॐ क्रौं कनिष्ठाभ्यां वौषट् । ॐ क्रः करतलकरपृष्ठाभ्यां फट् ।

एवमङ्गन्यासः । अस्त्राय फड़िति विशेषः ।

ध्यानम् ।

हृदयकमलमध्ये भृङ्गज्योतिःस्वरूपं
सुरुचिररुचिराङ्गं रक्तनीलाभवर्णम् ।
हिमकनकप्रकाशं पञ्चवर्णैरभिन्नं
दहनरविशशाङ्कभ्राजमानं नमामि ॥ १ ॥

हृदि प्राणो गुदेऽपानः समानो नाभिदेशगः ।
उदानः कण्ठदेशस्तु व्यानः सर्व्वशरीरगः ॥ २ ॥

हृदि ॐ प्राण-श्वेतवर्णभ्रमरप्राण इहागत्य सुखं चिरं तिष्ठतु स्वाहा । इति त्रिवारम् । गुदे ॐ अपान-रक्तवर्णभ्रमरप्राण इहागत्य सुखं चिरं तिष्ठतु स्वाहा । इति त्रिवारम् । नाभौ ॐ समान-पञ्चवर्णभ्रमरप्राण इहागत्य सुखं चिरं तिष्ठतु स्वाहा । इति त्रिवारम् । कण्ठे ॐ उदान-नीलवर्णभ्रमरप्राण इहागत्य सुखं चिरं तिष्ठतु स्वाहा । इति त्रिवारम् । सर्व्वशरीरे ॐ व्यान-पीतवर्णभ्रमरप्राण इहागत्य सुखं चिरं तिष्ठतु स्वाहा ।

इति त्रिवारम्। ॐ नागवायु-दक्षिणनाड़ीश्वेतवर्णभ्रमरप्राण इहागत्य सुखं चिरं तिष्ठतु स्वाहा। इति त्रिवारम्। ॐ कूर्म्मवायूत्तरनाड़ीरक्तवर्णभ्रमरप्राण इहागत्य सुखं चिरं तिष्ठतु स्वाहा। इति त्रिवारम्। ॐ सकलवायु-सुषुम्नानाड़ीतेजोवर्ण-भ्रमरप्राण इहागत्य सुखं चिरं तिष्ठतु स्वाहा। इति त्रिवारम्। ॐ देवदत्तवायूपान्तर्गतनीलवर्णभ्रमरप्राण इहागत्य सुखं चिरं तिष्ठतु स्वाहा। इति त्रिवारम्। ॐ धनञ्जयवायु-सर्व्वाङ्ग-स्थितमेघवर्णभ्रमरप्राण इहागत्य सुखं चिरं तिष्ठतु स्वाहा। इति त्रिवारम्। ॐ त्वगसृग्मांसमेदास्थिमज्जाशुक्राः सप्तवर्णा-स्सप्तधातवः भ्रमरप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा। इति त्रिवारम्। ॐ द्विसप्ततिसहस्रनाड़ीरोमसु प्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा। इति त्रिवारम्। प्राणप्रतिष्ठामन्त्रं विंशतिवारं जपेत्।

इति केषाञ्चिन्मते भ्रमरन्यासः।

### अथ तत्त्वन्यासः।

ॐ मं नमः पराय जीवतत्त्वात्मने नमः। ॐ भं नमः पराय प्राणतत्त्वात्मने नमः। एतद्वयं सकलवपुषि। ॐ बं नमः पराय मतितत्त्वात्मने नमः। ॐ फं नमः परायाहङ्कार-तत्त्वात्मने नमः। ॐ पं नमः पराय आत्मतत्त्वात्मने नमः। एतत्त्रयं हृदि। ॐ नं नमः पराय शब्दतत्त्वात्मने नमः शिरसि। ॐ धं नमः पराय स्पर्शतत्त्वात्मने नमः मुखे। ॐ दं नमः पराय रूपतत्त्वात्मने नमः हृदि। ॐ थं नमः पराय रसतत्त्वा-त्मने नमः गुह्ये। ॐ तं नमः पराय गन्धतत्त्वात्मने नमः पादयोः। ॐ णं नमः पराय श्रोत्रतत्त्वात्मने नमः कर्णयोः।

ॐ ढं नमः पराय त्वक्तत्त्वात्मने नमः त्वचि। ॐ डं नमः पराय चक्षुस्तत्त्वात्मने नमश्चक्षुषोः। ॐ ठं नमः पराय रसनातत्त्वात्मने नमः जिह्वायाम्। ॐ टं नमः पराय घ्राणतत्त्वात्मने नमः घ्राणयोः। ॐ ञं नमः पराय वाक्तत्त्वात्मने नमः वाचि। ॐ झं नमः पराय हस्ततत्त्वात्मने नमः हस्तयोः। ॐ जं नमः पराय पादतत्त्वात्मने नमः पादयोः। ॐ छं नमः पराय पायुतत्त्वात्मने नमः गुह्ये। ॐ चं नमः परायोपस्थतत्त्वात्मने नमः उपस्थे। ॐ ङं नमः परायाकाशतत्त्वात्मने नमः शिरसि। ॐ घं नमः पराय वायुतत्त्वात्मने नमः मुखे। ॐ गं नमः पराय तेजस्तत्त्वात्मने नमः हृदि। ॐ खं नमः पराय जलतत्त्वात्मने नमः लिङ्गे। ॐ कं नमः पराय पृथिवीतत्त्वात्मने नमः पादयोः। ॐ शं नमः पराय हृत्पुण्डरीकतत्त्वात्मने नमः हृदि। ॐ हं नमः पराय द्वादशकलाव्याप्तसूर्य्यमण्डलतत्त्वात्मने नमः दक्षिणांसे। ॐ सं नमः पराय षोड़शकलाव्याप्तसोममण्डलतत्त्वात्मने नमः वामांसे। ॐ रं नमः पराय दशकलाव्याप्तवह्निमण्डलतत्त्वात्मने नमः ककुदंसे। ॐ षं नमः पराय परमेष्ठितत्त्वात्मने वासुदेवाय नमः शिरसि। ॐ यं नमः पराय पुरुषतत्त्वात्मने सङ्कर्षणाय नमः मुखमण्डले। ॐ लं नमः पराय विश्वतत्त्वात्मने प्रद्युम्नाय नमः हृदि। ॐ वं नमः पराय निवृत्तितत्त्वात्मने अनिरुद्धाय नमः लिङ्गे। ॐ लं नमः पराय सर्व्वतत्त्वात्मने नारायणाय नमः पादयोः। ॐ क्षं नमः पराय कोपतत्त्वात्मने नृसिंहाय नमः सर्व्वाङ्गे। इति तत्त्वन्यासः।

ततो मूलेन कामवीजेन (अर्थात् क्लीं-वीजेन) वा पूरककुम्भकरेचकक्रमेण प्राणायामं कुर्य्यात्।

अथ पीठन्यासः ।

मूलाधारादुपर्य्युपरि न्यसेत् । ॐ आधारशक्तये नमः । ॐ प्रकृत्यै नमः । ॐ कूर्म्माय नमः । ॐ शेषाय नमः । ॐ पृथिव्यै नमः । ॐ क्षीरसिन्धवे नमः । ॐ श्वेतद्वीपाय नमः । ॐ मणिमण्डपाय नमः । ॐ कल्पद्रुमाय नमः । ॐ रत्नवेदिकायै नमः । ॐ रत्नसिंहासनाय नमः । एतद्धृदयपर्य्यन्तं विन्यस्य । ॐ धर्म्माय नमः दक्षिणांसे । ॐ ज्ञानाय नमः वामांसे । ॐ वैराग्याय नमः वामोरौ । ॐ ऐश्वर्य्याय नमः दक्षिणोरौ । ॐ अधर्म्माय नमः मुखे । ॐ अज्ञानाय नमः वामपार्श्वे । ॐ अवैराग्याय नमः दक्षिणपार्श्वे । ॐ अनैश्वर्य्याय नमः कव्याम् । हृदयमध्ये ॐ अनन्ताय नमः । ॐ आनन्दकन्दाय नमः । ॐ संविन्नालाय नमः । ॐ पद्माय नमः । ॐ प्रकृतिमयपत्रेभ्यो नमः । ॐ विकारमयकेसरेभ्यो नमः । ॐ पञ्चाशद्वर्णबीजाढ्यकर्णिकायै नमः । ॐ अं आदित्यमण्डलाय तापिन्यादिकलाभ्यो नमः । ॐ ठं सोममण्डलाय अमृतादिकलाभ्यो नमः । ॐ मं वह्निमण्डलाय धूम्रार्च्चिरादिकलाभ्यो नमः । ॐ सं सत्त्वाय नमः । ॐ रं रजसे नमः । ॐ तं तमसे नमः । ॐ आं आत्मने नमः । ॐ अं अन्तरात्मने नमः । ॐ पं परमात्मने नमः । ॐ ह्रीं ज्ञानात्मने नमः । पूर्व्वाद्यष्टदिक्षु मध्ये । ॐ विमलायै नमः । ॐ उत्कर्षिण्यै नमः । ॐ ज्ञानायै नमः । ॐ क्रियायै नमः । ॐ योगायै नमः । ॐ प्रह्व्यै नमः । ॐ सत्यायै नमः । ॐ ईशानायै नमः । मध्ये ॐ अनुग्रहायै नमः । ॐ नमो भगवते विष्णवे सर्व्वभूतात्मने वासुदेवाय सर्व्वात्मसंयोगयोगपद्मपीठात्मने नमः ।

आधारभावनेयं स्यात्ततो हृदयभावना।
अव्यक्तं परमाकाशं चिन्तयेद्धृदयाम्बुजे ॥ १ ॥
तन्मध्ये प्रणवं सर्व्वं मन्त्रबीजञ्च चिन्तयेत्।
स्फुरत्तारासमप्रख्यं तेजोरूपञ्च निर्म्मलम् ॥ २ ॥
तस्मादभ्युत्थितं ध्यायेद्विद्युत्पुञ्जसमप्रभम्।
मूलमन्त्रात्मकं तेजः सैषा हृदयभावना ॥ ३ ॥

हस्तभावना।

तस्मात्समुद्विलसित-प्रणवात्मकतेजसः।
मूलमन्त्रात्मकं तेजो दीपाद्दीपान्तरं यथा ॥ ४ ॥
श्वासमार्गेण निष्कृष्य विन्यसेद्धस्तयोः सुधीः।
करन्यासं ततः कुर्य्यादित्येषा हस्तभावना ॥ ५ ॥

देहभावना।

तत्तेजोव्रतहस्ताभ्यां व्यापकन्यासमुद्रया।
न्यसेत्तेजो हृदि सम्यक् निवारञ्च कलेवरम्।
अङ्गन्यासं ततः कुर्य्यादित्येषा देहभावना ॥ ६ ॥

एवं भावनाचतुष्टयं कृत्वा मन्त्रन्यासं समाचरेत्।

अथाष्टादशाक्षरगोपालमन्त्रः।

ॐ अष्टादशाक्षरगोपालमन्त्रस्य नारद ऋषिः गायत्री छन्दः सकललोकमङ्गलश्रीकृष्णो देवता क्लीं बीजं स्वाहा शक्तिः कृष्णप्रकृतिदुर्गाधिष्ठात्री देवता पुरुषार्थचतुष्टये विनियोगः।

ॐ क्लीं अङ्गुष्ठाभ्यां नमः। ॐ कृष्णाय तर्ज्जनीभ्यां स्वाहा। ॐ गोविन्दाय मध्यमाभ्यां वषट्। ॐ गोपीजन—अनामिकाभ्यां

हूं । ॐ वल्लभाय कनिष्ठाभ्यां वौषट् । ॐ स्वाहा करतलकर-पृष्ठाभ्यां फट् ।

एवमङ्गन्यासः । अस्त्राय फडिति विशेषः ।

एवं षड़ङ्गानि विन्यस्यास्त्रमन्त्रेण दिग्बन्धनं कुर्य्यात् । ततो मूलमन्त्रेण वपुषि व्यापकत्रयं कृत्वा प्रणवेन सहाध्यसेत् ।

ॐ क्लीं नमः शिरसि । ॐ कं नमः ललाटे । ॐ ष्णां नमः भ्रूमध्ये । ॐ यं नमः दक्षिणकर्णे । ॐ गों नमः वामकर्णे । ॐ विं नमः दक्षिणनेत्रे । ॐ न्दां नमः वामनेत्रे । ॐ यं नमः दक्षिणनासारन्ध्रे । ॐ गों नमः वामनासारन्ध्रे । ॐ पीं नमः मुखे । ॐ जं नमः कण्ठे । ॐ नं नमः हृदि । ॐ वं नमः नाभौ । ॐ ल्लं नमः दक्षिणकट्याम् । ॐ भां नमः वामकट्याम् । ॐ यं नमः लिङ्गे । ॐ स्वां नमः जानुनोः । ॐ हां नमः पादयोः । ॐ ॐ नमः शिरसि ।

अथ पदन्यासः ।

ॐ क्लीं नमः नेत्रयोः । ॐ कृष्णाय नमः मुखे । ॐ गोविन्दाय नमः हृदि । ॐ गोपीजनवल्लभाय नमः गुह्ये । ॐ स्वाहा नमः पादयोः । ॐ क्लीं कृष्णाय हृदयाय नमः । ॐ गोविन्दाय शिरसे स्वाहा । ॐ गोपीजन—शिखायै वषट् । ॐ वल्लभाय कवचाय हूं । ॐ स्वाहा अस्त्राय फट् । इति हृदयादिषु विन्यस्य । शिरसि ॐ नारदाय नमः । रसनायां ॐ गायत्र्यै नमः । हृदि ॐ कृष्णाय नमः इति न्यसेत् ।

अथ मूर्त्तिपञ्जरन्यासः ।

ॐ नं वं केशवाय नमः ललाटे । ॐ नं आं अर्य्यम्णे नमः उदरे । ॐ नं ईं श्रीधराय मित्राय नमः हृदि । ॐ मं ईं

गोविन्दाय वरुणाय नमः गले। ॐ गं डं विष्णवे अंशवे नमः दक्षिणपार्श्वे। ॐ वं जं मधुसूदनाय भगाय नमः दक्षिणबाहु-मूले। ॐ तें एं त्रिविक्रमाय विवस्वते नमः दक्षिणगलपार्श्वे। ॐ वां ऐं वामनाय इन्द्राय नमः वामपार्श्वे। ॐ सुं औं श्रीधराय पूष्णे नमः वामबाहुमूले। ॐ दें औं हृषीकेशाय पर्ज्जन्याय नमः वामगलपार्श्वे। ॐ वां अं पद्मनाभाय त्वष्ट्रे नमः पृष्ठे। ॐ यं अः विष्णवे नमः ककुदि। ॐ नमो भगवते वासुदेवाय नमः इति मन्त्रं मूर्द्ध्नि विन्यसेत्।

ध्यानम्।

शङ्खं चक्रं गदां पद्मं बिभ्राणं करपङ्कजैः।
हिरण्यवर्णपद्मस्थं फणासप्तविराजितम्॥ १॥
ध्यात्वा कृष्णन्तु मन्त्रज्ञो मन्त्रं शिरसि विन्यसेत्।
द्वादशाक्षरमन्त्रेण न्यस्तः स्याद्विष्णुरूपकः॥ २॥
मूर्त्तिपञ्जरकं न्यासं न्यसेन्मन्त्री समाहितः।
ततः परं विल्वमुद्रां निजमुद्राश्च दर्शयेत्॥ ३॥

ॐ नमः सुदर्शनाय अस्त्राय फड़िति दिग्बन्धनं कुर्य्यात्।

अथ ध्यानम्।

अव्यान्नीलोत्पलाङ्गद्युतिरहिरिपुपिच्छोल्लसत्केशजालो
गोपीनेत्रोत्पलाराधितललितवपुर्गोपगोवृन्दवीतः।
श्रीमद्वक्त्रारविन्दप्रविहसितशशाङ्काकृतिः पीतवासा
देवोऽसौ वेणुवाद्यक्षयितजनधृतिर्देवकीनन्दनो नः॥ १॥

मानसोपचारैः पूजा।

रम्ये वृन्दावने कनकस्थलीं विचिन्त्य तत्र कल्पद्रुमस्थले रत्न-कुट्टिममध्ये योगपीठं विचिन्त्य तत्राष्टदलारुणपङ्कजोपरि देवतां

पीतवस्त्राम् इन्द्रनीलप्रभां वेणुवादिनीं सर्व्वालङ्कारभूषितां नील-कुञ्चितकुन्तलां सिन्दूरनिभाधरां पद्मपत्रायतेक्षणां गोपगोपी-वृताम् अग्रे देवताभिर्दक्षिणे मुनिभिः पृष्ठतो योगिभिः वामे सेवकैः गन्धर्व्वाप्सरोभिर्वृताम् उपरि नारदेन स्तूयमानां चिन्तयेत् ।

एवं श्रीकृष्णरूपमात्मानं ध्यात्वा मनसा पाद्यादिनैवेद्यान्तं पूजयित्वा मूलाधारे त्रिकोणकुण्डे देवताग्निसमुज्ज्वले मनसा स्रुवेण सुषुम्नया स्रुचा मूलमन्त्रमुच्चार्य्याहन्तामहं जुहोमि स्वाहा । ॐ असत्यमहं जुहोमि स्वाहा । ॐ पैशुन्यमहं जुहोमि स्वाहा । ॐ काममहं जुहोमि स्वाहा । ॐ क्रोधमहं जुहोमि स्वाहा । ॐ लोभमहं जुहोमि स्वाहा । ॐ मोहमहं जुहोमि स्वाहा । ॐ मदमहं जुहोमि स्वाहा । ॐ मात्सर्य्यमहं जुहोमि स्वाहा । सङ्क्षेपपक्षे अहन्ताद्यष्टवृत्तीरहं जुहोमि स्वाहा । मानसं गण्डूषादिकं दत्त्वा मानसं जपं कुर्य्यात् ।

## अथ द्रव्यशुद्ध्यर्थं विशेषार्घसंस्कारः ।

ततः शङ्खाधारस्थापनार्थं भूमौ त्र्यस्त्रं षड़स्त्रं तद्बहिर्वृत्तं तद्बहिश्चतुरस्त्रं मत्स्यमुद्रया मण्डलं कृत्वा तत्र मूलेन क्षालितं शङ्खाधारं स्थापयित्वा अस्त्राय फड़िति शङ्खं क्षालयित्वा आधारे निधाय तत्र दूर्व्वाक्षतयवकुशाग्रतिलसर्षपान् गन्धपुष्पाणि च हृदयाय नमः इति निक्षिप्य विलोममातृकाक्षरैर्जलं पूरयेत् ।

विलोममातृका यथा—ॐ क्षं नमः । ॐ लं नमः । ॐ हं नमः । ॐ सं नमः । ॐ षं नमः । ॐ शं नमः । ॐ वं नमः । ॐ लं नमः । ॐ रं नमः । ॐ यं नमः । ॐ मं नमः । ॐ भं नमः । ॐ बं नमः । ॐ फं नमः । ॐ पं नमः ।

ॐ नं नमः। ॐ धं नमः। ॐ दं नमः। ॐ थं नमः। ॐ तं नमः। ॐ णं नमः। ॐ ढं नमः। ॐ डं नमः। ॐ ठं नमः। ॐ टं नमः। ॐ ञं नमः। ॐ झं नमः। ॐ जं नमः। ॐ छं नमः। ॐ चं नमः। ॐ ङं नमः। ॐ घं नमः। ॐ गं नमः। ॐ खं नमः। ॐ कं नमः। ॐ अः नमः। ॐ अं नमः। ॐ औं नमः। ॐ ओं नमः। ॐ ऐं नमः। ॐ एं नमः। ॐ ॡं नमः। ॐ ऌं नमः। ॐ ॠं नमः। ॐ ऋं नमः। ॐ ऊं नमः। ॐ उं नमः। ॐ ईं नमः। ॐ इं नमः। ॐ आं नमः। ॐ अं नमः।

इति पठित्वा शङ्खे जलपूरणं कुर्य्यात्। ॐ आधारं वह्निमण्डलं शङ्खं सूर्य्यमण्डलं जलं सोममण्डलं विचिन्त्य तत्तत्कलाश्चिन्तयेत्। ततो ॐ मं दशकलात्मने वह्निमण्डलाय नमः इति आधारम्। ॐ अं द्वादशकलात्मने सूर्य्यमण्डलाय नमः इति शङ्खम्। ॐ उं षोड़शकलात्मने चन्द्रमण्डलाय नमः। इति जलं सम्पूज्य।

गङ्गे च यमुने चैव गोदावरि सरस्वति।
नर्म्मदे सिन्धु कावेरि जलेऽस्मिन्सन्निधिं कुरु॥

इति मन्त्रेणाङ्कुशमुद्रया सूर्य्यमण्डलात्तीर्थमावाह्य स्वहृदयकमलाद्देवमावाह्य यं इति वायुवीजेन संशोष्य रं इति अग्निवीजेन सन्दह्य वं इति वरुणवीजेनाप्लाव्य तालत्रयं कुर्य्यात्। अस्त्रेण दिशो बद्धा शिखामन्त्रेण गालिनीमुद्रां दर्शयेत्। नेत्रमन्त्रेण वीक्ष्य कवचमन्त्रेण बाहुयुगलेनावगुण्ठ्य धेनुमुद्रयामृतीकृत्य मूलेनाभिमन्त्र्य आग्नेयादिचतुष्कोणेषु हृदयशिरःशिखाकवचं पूजयित्वा गन्धादिना देवमभ्यर्च्य मत्स्यमुद्रया आच्छाद्य शङ्खजलं

स्वशब्मूलमन्त्रमष्टधा जपेत् । शङ्खस्योत्तरतः पाद्यादीनि कुर्य्यात् । दक्षिणे प्रोक्षणीपात्रं निधाय जलेन पूरयित्वा किञ्चिदर्घाम्बु तत्र दत्त्वा मूलमन्त्रेण तज्जलेन देवतामात्मानं पूजोपकरणानि त्रिः प्रोक्ष्य स्वदेहे पीठपूजां कुर्य्यात् ।

इत्यर्घसंस्कारः ।

## ततो देवताशुद्धिः ।

शिरसि ॐ गुरुभ्यो नमः । आधारे ॐ गणेशाय नमः । आधारशक्त्यादिपीठपर्य्यन्तं यथास्थाने पूर्व्ववदाधारभावनया जलगन्धाक्षतपुष्पधूपदीपैः पूजयेत् । अथान्तरं मूलाधारे हृदये देवतेजोऽभ्यर्च्य कामवीजेनैकीकृत्य देवशरीरे हृदाद्यङ्ग-पञ्चकञ्च विन्यस्य हृदये आसनादिभूषान्तैरुपचारैः सम्पूज्य । हृदयाय नमः । शिरसे स्वाहा । शिखायै वषट् । कवचाय हूं । अस्त्राय फट् । इति हृदादिषु पूजयित्वा । ततः मुखे वेणवे नमः । हृदि वनमालायै नमः । स्तनादूर्द्ध्वं श्रीवत्साय नमः । कौस्तुभाय नमः । ततः मूलेन क्लीं-वीजेन चन्दनाम्बुभिः स्वशरीरं चर्च्चितं कृत्वा ललाटादिषु पूर्व्ववन्मूर्त्तिपञ्जरस्थानेषु अनामिकया दीपशिखाकृतीनि केशवाय कीर्त्त्यै नमः इत्यादि-मन्त्रैर्द्वादश तिलकानि गृहीत्वा मूलमन्त्रेण श्वेतचन्दनलिप्त-शुक्लतुलस्या रक्तचन्दनलिप्तकृष्णतुलस्या स्वपादयोः पुष्पाञ्जलिमेकं दद्यात् । चन्दनद्वयसिक्ताभ्यां श्वेतरक्तकरवीराभ्यां हृदये एकम् एवं चन्दनद्वयलिप्ताभ्यां श्वेतरक्तपद्माभ्यां मूर्द्ध्नि एकं तथाविधैः षड्भिः पुष्पैर्मूर्द्ध्नि पुनश्चन्दनद्वयलिप्तैः षड्भिरेव पुष्पैः श्वेतानि दक्षिणे रक्तानि वामे यथा भवति तथा सर्व्वाङ्गेषु एकमेवं पुष्पा-ञ्जलिपञ्चकं पूजयित्वा धूपदीपौ समर्प्य सुधारसैर्देवं प्रीणयित्वा

मुखवासं दत्त्वा परिवाराय गन्धपुष्पैर्धूपदीपैर्नैवेद्यैश्च सम्पूज्य ताम्बूल-नृत्यगीतादिभिः सन्तोष्य। इतः पूर्व्वं प्राणबुद्धिदेह-धर्म्माधिकारतो जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्म्मणा हस्ताभ्यां पद्भ्याम् उदरेण शिश्ना यत्स्मृतं यदुक्तं यत्कृतं तत्सर्व्वं ब्रह्मार्पणमस्तु स्वाहा। मदीयञ्च सकलं हरये समर्पये ॐ तत्सत्। इति मन्त्रेणात्मानं श्रीकृष्णचरणारविन्दे समर्पयेत्। ततः सुप्रसन्नं देवं भावयेत्। ततो योनिमुद्रयाष्टोत्तरशतं यथाशक्त्या वा मूलमन्त्रं जप्त्वा प्राणायामपूर्व्वकं प्रणवपुटितं वीजमष्टोत्तरशतञ्च जप्त्वा।

ॐ गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम्।
सिद्धिर्भवतु मे देव त्वत्प्रसादात्सुरेश्वर ॥ १ ॥

इति जपं समर्पयेत्।

इति देवताशुद्धिः।

## अथ देवपीठपूजा।

प्रोक्षणीजलं विसृज्य जलान्तरेण पूरयित्वा किञ्चिदर्घ्याम्बु तत्र दत्त्वा—अनुज्ञां देहि भगवन् वहिर्यागे तव प्रभो—इत्यनुज्ञां गृहीत्वा वाह्यपूजां समाचरेत्।

ततश्चन्दनपङ्केन पद्मपीठेन लेखयेत्।
मन्त्री वायव्यतस्तत्र ईशानान्तं समर्च्चयेत् ॥

इति वचनाद्योगपीठस्य मध्ये चन्दनेनाष्टपत्रं सकर्णिकं गुण-त्रयसंयुक्तं सकेशरभूपुरद्वयमध्यगचतुर्द्वारात्मकं यन्त्रं लिखित्वा तत्र पद्ममुद्रां प्रदर्श्य गुर्व्वादीन् पूजयेत्।

वायव्यकोणादारभ्य ईशानपर्य्यन्तं श्रीगुरुभ्यो नमः। परम-

गुरुभ्यो नमः । परापरगुरुभ्यो नमः । पीठस्य दक्षिणे । ॐ दुर्गायै नमः । ॐ महालक्ष्म्यै नमः । ॐ गणेशाय नमः ।

पीठमध्ये आधारशक्त्यादिपीठमन्त्रान् जलगन्धाक्षतपुष्पधूपदीपैः पूजयेत् । पीठमध्ये । ॐ आधारशक्तये नमः । ॐ प्रकृत्यै नमः । ॐ कूर्म्माय नमः । ॐ शेषाय नमः । ॐ क्षीरसमुद्राय नमः । ॐ श्वेतद्वीपाय नमः । ॐ रत्नोज्ज्वलसहितमहामण्डपाय नमः । ॐ कल्पवृक्षाय नमः ।

आग्नेयादिचतुष्कोणे । ॐ धर्म्माय नमः । ॐ ज्ञानाय नमः । ॐ वैराग्याय नमः । ॐ ऐश्वर्य्याय नमः ।

पूर्व्वादिचतुर्दिक्षु । ॐ अधर्म्माय नमः । ॐ अज्ञानाय नमः । ॐ अवैराग्याय नमः । ॐ अनैश्वर्य्याय नमः ।

पीठमध्ये । ॐ अनन्ताय नमः । ॐ आनन्दकन्दाय नमः । ॐ संविन्नालाय नमः । ॐ पद्माय नमः । ॐ प्रकृतिमयपत्रेभ्यो नमः । ॐ विकारमयकेसरेभ्यो नमः । ॐ पञ्चाशद्वर्णबीजाढ्यकर्णिकायै नमः । ॐ तापिन्यादिद्वादशकलात्मने ॐ अं सूर्य्यमण्डलाय नमः । ॐ अमृतादिषोड़शकलात्मने ॐ उं सोममण्डलाय नमः । ॐ धूम्रार्च्चिरादिदशकलात्मने ॐ मं वह्निमण्डलाय नमः । ॐ सं सत्त्वाय नमः । ॐ रं रजसे नमः । ॐ तं तमसे नमः । ॐ आं आत्मने नमः । ॐ अं अन्तरात्मने नमः । ॐ पं परमात्मने नमः । ॐ ह्रीं ज्ञानात्मने नमः ।

पीठस्य पूर्व्वाद्यष्टदिक्षु । ॐ विमलायै नमः । ॐ उत्कर्षिण्यै नमः । ॐ ज्ञानायै नमः । ॐ क्रियायै नमः । ॐ योगायै नमः । ॐ प्रह्व्यै नमः । ॐ सत्यायै नमः । ॐ ईशानायै नमः ।

मध्ये। ॐ अनुग्रहायै नमः। ॐ नमो भगवते विष्णवे सर्व्वभूतात्मने वासुदेवाय सर्व्वात्मसंयोगपद्मपीठात्मने नमः।

ततः कल्पतरोश्छायायाम् अरुणाम्भोजावस्थितं श्रीकृष्णं साक्षात्सम्पूज्यावाहयेत्। पीठमन्त्रेण सम्पूज्य मूलमन्त्रेण पूज्य-मूर्त्तिं पीठे निवेश्य साक्षतपुष्पाञ्जलिं गृहीत्वा स्वहृदये पूज्य-मूर्त्तिं यथोक्तरूपां ध्यात्वा—

स्वात्मसंस्थमजं शुद्धं त्वामहं परमेश्वर।
अरण्यामिव त्वद्वासं मूर्त्तावावाहयाम्यहम्॥

ॐ नमः मूलमन्त्रमुच्चार्य्य आगच्छ श्रीकृष्णेति वदन् हृद-यान्तःसंज्योतिः सुषुम्नावर्त्मना भ्रूमध्यगतं चिन्तयित्वा दक्षिण-नासारन्ध्रेण वहिर्गतं विचिन्त्य तानि पुष्पाणि पूज्यप्रतिमायां क्षिपन् तत्तेजः प्रतिमावामनासारन्ध्रेण प्रविश्य तद्धृदयस्थतेजसा ऐक्यं प्राप्तं चिन्तयेत्। एवमावाहनं प्रतिमायामेव।

तत्र शालग्रामे स्थावरे चावाहनविसर्ज्जनम्।

शालग्रामे स्थावरे च नित्यं सन्निहितो हरिः।
अप्स्वग्निहृदये सूर्य्ये स्थण्डिले प्रतिमासु च।
षट्स्वेतेषु हरेः सम्यगर्च्चनं मुनिभिः स्मृतम्॥ १॥

ॐ नमः श्रीकृष्ण इह तिष्ठेति स्थापनम् स्वमुद्रया।

मीनरूपो वराहश्च नरसिंहोऽथ वामनः।
आयातु देवो वरदो मम नारायणोऽग्रतः॥ १॥

तत आवाहनादिदशमुद्रां दर्शयेत्।

आवाहनं स्थापनञ्च सन्निधानं प्रकीर्त्तितम्।
स्वात्सन्निरोधं सकलीकरणञ्चावगुण्ठनम्॥ १॥

धेनुपीयूषकरणं महामुद्रा तथैव च ।
परमीकरणञ्चैव दश मुद्राः प्रकीर्त्तिताः ॥ २ ॥

श्रीकृष्ण इहागच्छ इह तिष्ठ इह सन्निहितो भव इह सन्निरुद्धो भव इह सम्मुखो भव ।

देवताङ्गेषु षड़ङ्गन्यासः । सकलीकरणम् । धेनुमुद्रया अमृतीकृत्य महामुद्रया परमीकरणं कृत्वा ॐ आमित्यादि प्राणप्रतिष्ठां जपेत् ।

अमुष्य कृष्णस्य प्राणा इह प्राणाः । अमुष्य कृष्णस्य जीव इह स्थितः । अमुष्य कृष्णस्य सर्व्वेन्द्रियाणि इह स्थितानि । अमुष्य कृष्णस्य वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणाः इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा ।

ततो निजमुद्रां दर्शयेत् विल्वमुद्राञ्च ।

शङ्खं चक्रं गदां पद्मं मुषलं शार्ङ्गमेव च ।
खड्गं पाशाङ्कुशौ चैव वैनतेयं तथैव च ॥ १ ॥
श्रीवत्सकौस्तुभौ वेणुमभीतिवरदौ तथा ।
वनमालां तथा मन्त्री दर्शयेद्विष्णुपूजने ॥ २ ॥

अथोपचारदानानां क्रमः ।

आसनं स्वागतं पाद्यमर्घमाचमनीयकम् ।
मधुपर्काचमस्नानवसनाभरणानि च ॥ १ ॥
सुगन्धकुसुमे धूपदीपनैवेद्यचन्दनम् ।
प्रयोजयेदर्च्चनायामुपचारांश्च षोड़श ॥ २ ॥

इति षोड़शोपचारक्रमः ।

अर्घपाद्याचमनकमधुपर्काचमान्यपि ।
गन्धादयो निवेद्यान्ता उपचारा दश क्रमात् ॥ १ ॥

गन्धादयो निवेद्यान्ताः पूजाः पञ्चोपचारिकाः ।
पूजा च त्रिविधा प्रोक्ता तासामेकं समाश्रयेत् ॥ १ ॥

## अथ पूजाविधानम् ।

कल्पितपुष्पैर्मूलमन्त्रमुच्चार्य्य तत्रैवासने श्रीकृष्णाय आसनं नमः इत्यासनं दत्त्वा आसने पञ्चपुष्पाञ्जलिं दत्त्वा आसनमुद्रां दर्शयेत् । जलधारां दद्यात् । एवमुपचारान्तरेऽपि जलदानम् । मूलमन्त्रमुच्चार्य्य कृष्णाय पाद्यं नमः । इति पादाम्बुजे पाद्यं दद्यात् । मुद्रां दर्शयेत् ।

सुपाद्यं पादयोर्देव पद्मनाभ सनातन ।
विष्णो कमलपत्राक्ष गृहाण मधुसूदन ॥ १ ॥

मूलमन्त्रमुच्चार्य्य श्रीकृष्णाय अर्घं स्वाहा । शिरसि अर्घं दद्यात् । मुद्रां दर्शयेत् ।

तापत्रयहरं दिव्यं परमानन्दलक्षणम् ।
तापत्रयविनिर्मुक्तं तवार्घं कल्पयाम्यहम् ॥ २ ॥

एवं सर्व्वत्र उपचारादौ मूलमन्त्रमुच्चार्य्य श्रीकृष्णाय आचमनीयं स्वधा इति मुखे दद्यात् । आचमनीयमुद्रां दर्शयेत् ।

मन्दाकिन्यास्तु यद्वारि सर्व्वपापहरं शुभम् ।
गृहाणाचमनीयं त्वं मया भक्त्या निवेदितम् ॥ ३ ॥

श्रीकृष्णाय मधुपर्कं स्वधा इति मुखाभ्यासे मधुपर्कं दद्यात् । मुद्रां दर्शयेत् ।

मधुपर्कं महादेव ब्रह्माद्यैः कल्पितं पुरा ।
ददामि साम्प्रतं भक्त्या गृहाण पुरुषोत्तम ॥ ४ ॥

अथ पुनराचमनं पूर्व्ववत् । देवं स्नानमण्डपमागतं विचिन्त्य

मूलमन्त्रमुच्चार्य्य श्रीकृष्णाय स्नापयामि वौषट्। मुद्रां दर्शयेत्।

त्वमापः पृथिवी चैव ज्योतिस्त्वं वायुरेव च।
लोकसंवृत्तिमन्त्रेण वारिणा स्नापयाम्यहम् ॥ ५ ॥

श्रीकृष्णाय वस्त्रं नमः। पीतवस्त्रद्वयं प्रणवप्रोच्चितम्। कटिदेशे वस्त्रं दद्यात् मुद्राञ्च। उत्तरीयञ्च स्कन्धदेशे दद्यात्।

देवतन्तुसमायुक्ते पीतवर्णसमन्विते।
सुवर्णवर्णप्रभवे वाससी तव केशव ॥ ६ ॥

श्रीकृष्णाय यज्ञोपवीतं नमः।

ऋग्यजुःसाममन्त्रेण निर्म्मितं पद्मयोनिना।
सावित्रीग्रन्थिसंयुक्तमुपवीतं तवाच्युत ॥ ७ ॥

श्रीकृष्णायाभरणं नमः। यथास्थाने आभरणं दत्त्वा मुद्रां दर्शयेत्।

मुद्रा यथा—मधुपर्कासमुत्ताना मुद्रालङ्करणी स्मृता।

आचमनजलधारां दद्यात्।

दिव्यरत्नसमायुक्ता वह्निभानुसमप्रभा।
गात्राणि शोभयन्त्वेते अलङ्काराश्च माधव ॥ ८ ॥

मूलमन्त्रमुच्चार्य्य श्रीकृष्णाय गन्धं नमः। हृद्देशे गन्धं दद्यात्। मुद्रां दर्शयेत्।

मुद्रा यथा—या मुक्तानामिका मुष्टिर्गन्धमुद्रेति सा स्मृता।

कश्यपस्य त्र्यायुषमित्यादिभिर्देवमूर्त्तिपञ्जरमन्त्रैस्तत्तत्स्थानेषु द्वादश तिलकानि कार्य्याणि।

शरीरं ते न जानामि चेष्टां नैव च केशव।
मया निवेदितान् गन्धान् प्रगृहाण विलेपनम् ॥ ९ ॥

शिरः कण्ठे ललाटे च बाह्वे दक्षिणवामयोः।
हृदि नाभौ च पृष्ठे च पार्श्वयोश्च द्वयं द्वयम्॥

अथ पुष्पदानम्।

तुलसीद्वय-पद्मद्वय-जातिद्वय-केतकीद्वय-करवीरद्वय-उत्पल-द्वय-कह्लारद्वय-मल्लिका-कुन्द-मन्दार-नन्द्यावर्त्त-पलाश-पाटल्या--वर्त्तक-चम्पक-नागकेशराशोक-विल्व-कर्णिकार-सेवत्यादीनामन्येषामपि सुगन्धस्वरूपाणां यथासम्भवं पुष्पं संस्कृत्य मूलमन्त्र-मुच्चार्य्य श्रीकृष्णाय पुष्पं वौषट्। मूर्द्ध्नि। गर्भकपुष्पं दत्त्वा गले मालां दद्यात्। केशमध्ये तु गर्भक इत्यमरः। आत्मार्च्चन-वत्पुष्पाञ्जलिं दत्त्वा मुद्रां दर्शयेत्।

मुद्रा यथा—उत्थिताधोमुखी मध्या बद्धाङ्गुष्ठा यदीतराः।
आकुञ्चितास्तथा ख्याता पुष्पमुद्रा मनीषिभिः॥
तुलसीमल्लिकाजातीपद्मपुष्पाणि यानि ते।
निर्म्मिलानि विधात्रा वै गृहाण पुरुषोत्तम॥ १०॥

ततः दर्पणं दर्शयेत्।

अरूपाय सुरूपाय दिव्यरूपाय ते नमः।
मुखावलोकनं देव दर्पणं प्रतिगृह्यताम्॥ ११॥

अनन्तरं पूर्व्वोक्तकृतन्यासक्रमेण एतेषु न्यासपदैर्गन्धपुष्पैः प्रपूजयेत्। एवमङ्गानि पूजयेत्। वेणुं वनमालां श्रीवत्सं कौस्तुभम् एतानि सम्पूज्य गन्धपुष्पाणि गृहीत्वा आवरणानि पूजयेत्।

अथावरणपूजा।

कर्णिकायाः पूर्व्वादिचतुर्दिक्षु। ॐ दामाय नमः। ॐ सुदामाय नमः। ॐ वसुदाय नमः। ॐ किङ्किणीदाय नमः।

आग्नेयादिचतुष्कोणेषु। ॐ हृदयाय नमः। ॐ शिरसे स्वाहा। ॐ शिखायै वषट्। ॐ कवचाय हूं। पूर्व्वादिचतुर्दिक्षु। ॐ अस्त्राय फट्।

पूर्व्वादिदिग्गताः अष्टौ पट्टमहिषीः पूजयेत्। ॐ रुक्मिण्यै नमः। ॐ सत्यभामायै नमः। ॐ नग्नजित्यै नमः। ॐ सुनन्दायै नमः। ॐ मित्रविन्दायै नमः। ॐ सुलक्ष्मणायै नमः। ॐ जाम्बवत्यै नमः। ॐ सुशीलायै नमः।

पूर्व्वाद्यष्टदिक्षु वसुदेवादीन् पूजयेत्। तद्यथा—ॐ वसुदेवाय नमः। ॐ देवक्यै नमः। ॐ नन्दगोपाय नमः। ॐ यशोदायै नमः। ॐ बलभद्राय नमः। ॐ सुभद्रायै नमः। ॐ गोपेभ्यो नमः। ॐ गोपीभ्यो नमः।

एभ्यो वहिश्चतुर्दिक्षु। ॐ मन्दाराय नमः। ॐ सन्तानाय नमः। ॐ पारिजाताय नमः। ॐ कल्पवृक्षाय नमः। मध्ये। ॐ हरिचन्दनाय नमः।

ततो मण्डलवाह्ये वैष्णवान् पूजयेत्। ॐ नारदाय नमः। ॐ पर्व्वताय नमः। ॐ उद्धवाय नमः। ॐ अक्रूराय नमः। ॐ निषठाय नमः। ॐ दारुकाय नमः। ॐ विष्वक्सेनाय नमः। ॐ वैनतेयाय नमः।

पूर्व्वादिदशदिक्षु। ॐ इन्द्राय नमः। ॐ अग्नये नमः। ॐ यमाय नमः। ॐ नैर्ऋताय नमः। ॐ वरुणाय नमः। ॐ वायवे नमः। ॐ कुवेराय नमः। ॐ ईशानाय नमः। ॐ अनन्ताय नमः। ॐ ब्रह्मणे नमः।—ॐ वज्राय नमः। ॐ शक्तये नमः। ॐ दण्डाय नमः। ॐ खड्गाय नमः। ॐ पाशाय नमः। ॐ अङ्कुशाय नमः। ॐ गदायै

नमः। ॐ शूलाय नमः। ॐ चक्राय नमः। ॐ पद्माय नमः।

अशक्तविधिं दर्शयति। ॐ श्रीकृष्णाय नमः। ॐ वासुदेवाय नमः। ॐ नारायणाय नमः। ॐ देवकीनन्दनाय नमः। ॐ यदुश्रेष्ठाय नमः। ॐ वार्ष्णेयाय नमः। ॐ असुराक्रान्तभारहारिणे नमः। ॐ धर्म्मसंस्थापकाय नमः।

इत्यष्टपुष्पाञ्जलिं दद्यात्। इत्यावरणपूजा।

अथ धूपदीपदानार्थं प्रथमतो घण्टां वादयेत्।

घण्टां वीक्षणादिभिः संस्कृत्य ॐ हूं गजघनात्मने नमः इति गन्धपुष्पैः पूजयेत्।

गजध्वने महानाद घण्टारूप नमोऽस्तु ते।

इति नमस्कारः।

ॐ गजध्वनिमातः स्वाहा। इति घण्टां किञ्चिच्चालयेत्।

मूलमन्त्रमुच्चार्य्य श्रीकृष्णाय एष धूपः स्वाहा। इति घ्राणदेशे धूपं दद्यात्।

धूपमुद्रा यथा—अङ्गुष्ठतर्ज्जनीयुक्तौ तिस्रः सङ्कुचिताः पराः।

मुद्रा धूपप्रदानेन देवानां तुष्टिकारिणी॥

वनस्पतिरसो दिव्यो गन्धाढ्यः सुमनोहरः।

मया निवेदितो भक्त्या धूपोऽयं प्रतिगृह्यताम्॥१२॥

अथ दीपः।

ततो दीपमानीय पूर्व्ववत्संस्कारं कृत्वा मूलमन्त्रमुच्चार्य्य श्रीकृष्णाय नमः एष दीपः स्वाहा। इति निवेद्य प्रथमतश्चक्षुःसमीपे कृत्वा पुनर्ल्ललाटात्पादपर्य्यन्तं पादतो ललाटपर्य्यन्तं पारावतश्चामयेत्। इति महामुद्रा। जलधारां दद्यात्।

दिक्प्रकाशो महादीपः सर्व्वत्र तिमिरापहः ।
सबाह्याभ्यन्तरज्योतिर्दीपोऽयं प्रतिगृह्यताम् ॥ १३ ॥

अथ नैवेद्यम् ।

पुष्पाञ्जलित्रयं दद्यात् पाद्यमाचमनं ततः ।

मूलेन पुनः पुष्पाञ्जलित्रयं दद्यात् । पुनः पाद्यमाचमनं दत्त्वा नैवेद्यं संस्कुर्य्यात् ।

नैवेद्यसंस्कारः ।

मूलमन्त्रेण वीक्षणम् । अस्त्रमन्त्रेण प्रोक्षणम् । चक्रमुद्रया अभिरक्षणम् । यमिति वायुबीजेन नैवेद्याल्लग्नं दोषं परिशोष्य रमिति अग्निबीजाभितप्तं दक्षिणकरेण सन्दह्य तथा वामकरेण सन्यस्य वमिति अमृतबीजेन नैवेद्यम् अमृतपरिपूर्णं विचिन्त्य मूलेनामृतीकृत्य नैवेद्यमभिस्पृशन् मूलमन्त्रमष्टवारं जपन् पुनः सुरभिमुद्रया परिपूर्णं चिन्तयित्वा गन्धपुष्पैः प्रपूजयेत् ।

ततः पुष्पाञ्जलिं गृहीत्वा नैवेद्यग्रहणार्थं हरिं प्रार्थ्य नैवेद्यमर्पयेत् । अथ चुलुकं गृहीत्वा मूलमन्त्रमुच्चार्य्य श्रीकृष्णाय नैवेद्यं स्वाहा । इत्युच्चार्य्य देवतीर्थेन जलं निक्षिपेत् वारत्रयम् । ततः पुष्पाञ्जलिं गृहीत्वा ।

निवेदयामि भगवञ्जुषाणेदं हविर्हरे ।

इति प्रार्थयित्वा नैवेद्यगतं तेजो हरेरास्यगतं नीत्वा चुलुकोदकं गृहीत्वा ॐ अमृतोपस्तरणमसि स्वाहा । इति हरेरास्यगतं निवेदयेत् ।

ग्रासमुद्रां वामदोष्णा विकचोत्पलसन्निभाम् ।
प्राणमुद्रां दक्षिणेन दर्शयेत्साधकोत्तमः ॥

प्राणादिमुद्रालक्षणं यथा।

स्पृष्टकनिष्ठोपकनिष्ठिके द्वे स्वाङ्गुष्ठमूर्द्धा प्रथमेह मुद्रा।

ॐ श्रीकृष्णाय प्राणाय स्वाहा।

तथापरा तर्ज्जनीमध्यमे स्यात्—

ॐ श्रीकृष्णाय अपानाय स्वाहा।

अनामिकामध्यमिके च मध्या ॥१॥

ॐ श्रीकृष्णाय व्यानाय स्वाहा।

अनामिकातर्ज्जनीमध्यमासु कनिष्ठिकायुक्तसुकुञ्चितासु।

ॐ श्रीकृष्णाय उदानाय स्वाहा।

स्यात्पञ्चयुक्ता यदि पूर्व्वरूपा प्राणादिमुद्रा निजमन्त्रयुक्ता ॥२॥

ॐ श्रीकृष्णाय समानाय स्वाहा।

ततो नैवेद्यमुद्रां दर्शयेत्।

पञ्चाङ्गुल्यग्रसंलग्ना ग्रोथितोर्द्ध्वमुखी यदि।

एतानि बद्धा मुद्रेयं नैवेद्यस्य प्रकीर्त्तिता॥

ततो नैवेद्यमुद्रिकाम् अङ्गुष्ठाभ्यां प्रधानया करद्वये स्पृशन् अनामिकां निजमनुं जपन् प्रदर्शयेत्। नानाविधभोज्यादि-क्रमेण नैवेद्यं कल्पयेत्। ॐ गीं नमः परायात्मने अनिरुद्धाय नैवेद्यं कल्पयामि। इत्यनेन निजमन्त्रं जपेत्।

ततो देवं मूलमन्त्रेण नमस्कृत्य पानार्थं मूलमन्त्रेण जलं दत्वा होमार्थं द्विगुणं मूलमन्त्रं जप्त्वा नैवेद्यं श्रीकृष्णोपभुक्तं चिन्तयेत्।

ततो घृतादिसन्दीप्ता पिष्टकादिविनिर्म्मिता।

पारावतभ्रमाकारमुच्चैर्दीपं प्रदर्शयेत्॥

ततो धेनुमुद्रया जलममृतीकृत्य पुनरापोशानं दत्त्वा मूल-मन्त्रमुच्चार्य्य । ॐ अमृतापिधानमसि स्वाहा ।

बहुतीर्थानि तोयानि गन्धयुक्तानि वै प्रभो ।
आपोशानं मया दत्तं गृहाण परमेश्वर ॥

इत्यापोशानदानम् ।

अन्नं चतुर्विधञ्चैव रसैः षड्भिः समन्वितम् ।
मया निवेदितं भक्त्या नैवेद्यं तव केशव ॥ १४ ॥

ततो देवस्य हस्ते मुखान्नैवेद्य एव अवतारितञ्च तत्तेजो देवमुखे उद्वास्य ॐ विष्वक्सेनाय नमः । इति मन्त्रेण गन्ध-पुष्पधूपदीपनैवेद्यं दत्त्वा पृथिवीमुपलिप्य—

गण्डूषदन्तधावनाचमनास्यहस्त-
मृज्यानुलेपमुखवासकमाल्यभूषाः ।
ताम्बूलमप्यभिसमर्प्य सुवाद्यनृत्य-
गीतैस्सुहृत्तमभिपूज्य हरिः पुरेव ॥ १ ॥
गन्धादिभिः सपरिवारमथार्घमस्मै
दत्त्वा विधाय कुसुमाञ्जलिमादरेण ।
स्तुत्वा प्रणम्य शिरसा चुलुकोदकेन
स्वात्मानमर्पयति तच्चरणाब्जमूले ॥ २ ॥

इतः पूर्व्वं प्राणबुद्धिरिति मन्त्रेण आत्मानं समर्पयेत् पूर्व्ववत् प्रदक्षिणानन्तरम् । ॐ नवीननीरदश्याममित्यादिगौतमी-तन्त्रोक्तगोपालस्तवराजं पठेत् ।

ध्येयं सदा परिभवघ्नमभीष्टदोहं
तीर्थास्पदं शिवविरञ्चिनुतं शरण्यम् ।

भृत्यार्त्तिहं प्रणतपाल भवाब्धिपोतं
वन्दे महापुरुष ते चरणारविन्दम् ॥ १ ॥

प्राणायामत्रयं कृत्वा सुप्रसन्नं देवं भावयन्सहस्रमष्टोत्तरशतं वा जप्त्वा जलचुलुकं गृहीत्वा—

गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम्।
सिद्धिर्भवतु मे देव त्वत्प्रसादात्सुरेश्वर ॥

इति जपं देवतादक्षिणकरे समर्प्य तर्पणविधिना तर्पणं कुर्य्यात्।

तर्पणं स्याद्दशांशो च द्विगुणं मार्ज्जनं स्मृतम्।
कृत्वा दूर्व्वाक्षतं दद्यात्कर्पूरादीन् प्रदीपयेत् ॥

इति वचनाद्दूर्व्वाक्षतं दत्त्वा कर्पूरादिभिर्दीपयेत्। तदनन्तरम्

पुष्पाञ्जलित्रयं दत्त्वा जपं कुर्य्याद्विचक्षणः ॥
मन्त्रहीनं क्रियाहीनं भक्तिहीनं जनार्द्दन।
यत्पूजितं मया देव परिपूर्णं तदस्तु मे ॥ १ ॥
आवाहनं न जानामि न जानामि विसर्ज्जनम्।
पूजाविधिं न जानामि क्षम्यतां परमेश्वर ॥ २ ॥

ततो नमस्कारमुद्रां दर्शयेत्। लक्षणं यथा—

नाभौ हृदि ललाटे च करसम्पुटयोगतः।
नमस्कारे त्वियं मुद्रा देवतानां प्रसादिनी ॥ १ ॥

द्रव्यमुद्राश्च मूलमन्त्रमुच्चार्य्य श्रीकृष्णमुद्वासयामीति वदन् प्रतिमाहृदयात्प्रतिमादक्षिणनासारन्ध्रेण आवाहिततेज आकृष्य स्ववामनासारन्ध्रेण संहृत्य स्वहृदयपद्मे समापनीमुद्रां दर्शयित्वा नमस्कुर्य्यात्। समापनीमुद्रा यथा।

मिथःपृष्ठार्पितौ हस्तावन्योन्यग्रथिताङ्गुलिः।
कृत्वा बद्धा नमस्कुर्य्यात् सा स्यान्मुद्रा समापनी ॥ २ ॥

ततः परम्—

अच्छिद्राशंसनं कुर्य्यान्निर्माल्यग्रहणं ततः ।
निर्माल्यं मस्तके धार्य्यं सर्व्वाङ्गेष्वनुलेपनम् ।
नैवेद्यशेषं भुञ्जीत दत्त्वा तं भक्तिशालिने ॥ ३ ॥

ततो देवस्य पादमूलान्निर्माल्यैकदेशं गृहीत्वा—

बलिर्विभीषणो भीष्मः कपिलो नारदोऽर्ज्जुनः ।
प्रह्लादश्चाम्बरीषश्च वसुर्वायुसुतः शुकः ॥ १ ॥
विष्वक्सेनोद्धवाक्रूराः सनकाद्या महर्षयः ।
प्रसादं वासुदेवस्य सर्व्वे गृह्णन्तु वैष्णवाः ॥ २ ॥

इति दत्त्वा स्वयं निर्माल्यं शिरसि गृहीत्वा—

विष्णोर्निर्माल्यशेषेण निजाङ्गानि च मार्ज्जयेत् ।
दुरितानि च नश्यन्ति व्याधयो यान्ति सङ्क्षयम् ॥ १ ॥

इति वदन्निर्माल्यशेषेण सर्व्वाङ्गे परिमार्ज्जनं कृत्वा पादोदकसेवां कुर्य्यादिति शेषः । इत्यष्टादशाक्षरगोपालपूजा समाप्ता ।

अत्रावाहनादिदशमुद्रा दर्शनीयाः ।

## अथ दश मुद्राः ।

आवाहनं स्थापनञ्च सन्निधानं प्रकीर्त्तितम् ।
स्वात्मसन्निरोधं सकलीकरणञ्चावगुण्ठनम् ॥ १ ॥
धेनुपीयूषकरणं महामुद्रा तथैव च ।
परमीकरणञ्चैव दश मुद्राः प्रकीर्त्तिताः ॥ २ ॥

आसां लक्षणमाह ।

हस्ताभ्यामञ्जलिं कृत्वानामिकामूलपर्व्वणोः ।
अङ्गुष्ठौ निक्षिपेत्सेयं मुद्रा त्वावाहनी स्मृता ॥ १ ॥

अधोमुखी त्वियं चेत्स्यात् स्थापनी मुद्रिका स्मृता ॥ २ ॥
उच्छ्रिताङ्गुष्ठमुष्ट्यौ तु संयोगात्सन्निधापनी ॥ ३ ॥
अन्तःप्रवेशिताङ्गुष्ठा सैव सम्बोधनी मता ॥ ४ ॥
उत्तानमुष्टियुगला सम्मुखीकरणी मता ॥ ५ ॥
देवताङ्गे षडङ्गानां न्यासः स्यात्सकलाकृतिः ॥ ६ ॥
सव्यहस्तकृता मुष्टिर्दीर्घाधोमुखतर्ज्जनी।
अवगुण्ठनमुद्रेयमभितो भ्रामिता मता ॥ ७ ॥
अन्योऽन्याभिमुखाश्लिष्टा कनिष्ठानामिका पुनः।
तथैव तर्ज्जनी मध्या धेनुमुद्रा प्रकीर्त्तिता ॥ ८ ॥
अमृतीकरणञ्चैव तया साधकसत्तमः ॥ ९ ॥
अन्योऽन्यग्रथिताङ्गुष्ठा प्रसारितपराङ्गुलिः।
महामुद्रेयमुदिता परमीकरणं बुधैः ॥ १० ॥
प्रयोजयेदिमा मुद्रा देवताह्वानकर्म्मणि ॥

इति दशमुद्रालक्षणं समाप्तम् ॥

## अथ विष्णोः षोड़शमुद्राः।

शङ्खं चक्रं गदां पद्मं मुषलं शार्ङ्गखड्गकौ।
पाशाङ्कुशौ वैनतेयं श्रीवत्सं कौस्तुभं तथा।
वेणुञ्चैवाभयवरं वनमालां प्रदर्शयेत् ॥ १ ॥

आसां लक्षणमाह।

वामाङ्गुष्ठं दक्षचतुष्केण निबध्य
दक्षाङ्गुष्ठं वामचतुष्काभिमुखञ्चेत्।
शङ्खस्येयं सङ्कलिता सा किल मुद्रा
देव्या विष्णोश्चापि विशिष्य प्रमदाय ॥ १ ॥

अन्योऽन्याभिमुखतया प्रसार्य्य हस्तौ
ऊर्द्धाधः परिनिहतौ तलोपलग्नौ ।
स्यातां चेदियमुदितेह चक्रमुद्रा
साङ्गुष्ठा यदि च कनिष्ठिकाद्वयोः स्यात् ॥ २ ॥

मध्यायुगं संहतमुन्नमय्य पाणिद्वयं सम्पुटवद्विधाय ।
आकूर्परं हस्तयुगं प्रसार्य्य गदां तदा तन्त्रविदो वदन्ति ॥ ३ ॥

अङ्गुष्ठयुग्मं विनिवेश्य मध्ये पत्रायिताभिश्च पराङ्गुलीभिः ।
पद्मानुकारं हृदये निदध्यात्सा पद्ममुद्रागममार्गसिद्धैः ॥ ४ ॥

मुष्टिङ्कृत्वा तु हस्ताभ्यां वामस्योपरि दक्षिणम् ।
ज्ञेया मुषलमुद्रेयं सर्व्वविघ्नविनाशिनी ॥ ५ ॥

वामस्यतर्ज्जनीप्रान्तं मध्यमान्ते नियोजयेत् ।
प्रसार्य्य च करं वामं दक्षिणं करमेव च ॥
नियोज्य दक्षिणस्कन्धे वाणग्रहणवत्ततः ।
तर्ज्जन्यङ्गुष्ठकाभ्यान्तु कुर्य्यात्तां शार्ङ्गमुद्रिकाम् ॥ ६ ॥

अङ्गुष्ठया नमेद्विद्वान् कनिष्ठाञ्चाप्यनामिकाम् ।
विमुच्य तर्ज्जनीमध्यां खड्गमुद्रां प्रदर्शयेत् ॥ ७ ॥

पाशाकारं नियोज्यैव वामाङ्गुष्ठाग्रतर्ज्जनीम् ।
दक्षिणे मुष्टिमास्थाय तर्ज्जनीञ्च प्रसारयेत् ॥
तेनैव संस्पृशेन्मन्त्री वामाङ्गुष्ठस्य मूलकम् ।
पाशमुद्रेयमुदिता केशवार्च्चनकर्म्मणि ॥ ८ ॥

तर्ज्जनीमीषदाकुञ्च्य शेषाणाञ्च निपीड़नम् ।
अङ्कुशं दर्शयेच्चक्राद्देवस्याग्रे तु मन्त्रवित् ॥ ९ ॥

अन्योऽन्यपृष्ठे संयोज्य कनिष्ठे च परस्परम् ।
तर्ज्जन्यग्रसमङ्कृत्वा अङ्गुष्ठाग्रं तथैव च ॥

ईषदालम्बितङ्कृत्वा मध्यानामि च पक्षवत् ।
प्रसार्य्य गारुड़ं मुद्रा कृष्णपूजाविधौ स्मृता ॥ १० ॥
अन्योऽन्यसम्मुखे तत्र कनिष्ठातर्ज्जनीयुगे ।
मध्यमानामिके तद्वदङ्गुष्ठेन निपीड़येत् ।
दर्शयेद्वक्षसि मुद्रां यत्नाच्छ्रीवत्ससंज्ञिकाम् ॥ ११ ॥
अन्योऽन्याभिमुखे तद्वत्कनिष्ठे सन्नियोजयेत् ।
तर्ज्जन्यनामिके तद्वत्करौ त्वन्योऽन्यपृष्ठगौ ॥
कुञ्चितान्योऽन्यसंलग्ना दक्षहस्ताधराङ्गुलिः ।
निधाय मध्यदेशे तु वाममध्यमतर्ज्जनी ॥
संयोज्य मणिबन्धे तु दक्षिणे योजयेत्ततः ।
वामाङ्गुष्ठे तु मुद्रेयं प्रसिद्धा कौस्तुभो मतः ॥ १२ ॥
ओष्ठे वामकराङ्गुष्ठो लग्नस्तस्य कनिष्ठिका ।
दक्षिणाङ्गुष्ठसंल्यग्ना तत्कनिष्ठा प्रसारिता ॥
तर्ज्जनीमध्यमानामाः किञ्चित्सङ्कोच्य चालिताः ।
वेणुमुद्रेयमुदिता सुगुप्ता प्रेयसी हरेः ॥ १३ ॥
अग्रं प्रसारितङ्कृत्वा श्लिष्टशाखन्तु देशिकः ।
प्राङ्मुखन्तु करङ्कृत्वा अभयः परिकीर्त्तितः ॥ १४ ॥
दक्षं भुजं प्रसारित्वा जानूपरि निवेशयेत् ।
प्रसुतं दर्शयेद्वीरो वरः सर्व्वार्थसाधकः ॥ १५ ॥
उत्तानतर्ज्जनीभ्यान्तु ऊर्द्ध्वाधःक्रमतस्तथा ।
मालावत्कृतविस्तारा वनमाला प्रकीर्त्तिता ॥ १६ ॥

इति श्रीविष्णोर्निजषोड़शमुद्रालक्षणम् ।

## अथ पूजनविधानक्रमनियमः ।

पाद्यासनाभरणचन्दनस्वागतेषु
वस्त्रे नमो मधुयुताचमने स्वधा च ।
स्वाहार्घधूपकप्रदीपनिवेदनेषु
वौषट् तथा स्नपनपुष्पकदानयोश्च ॥ १ ॥
धूपे दीपे च नैवेद्ये वह्निहोमे तथैव च ।
स्वाहाशब्दः प्रयोक्तव्यः शेषे चैव नमस्कृतिः ॥

इति केचिन्मते ।

अथ उपचारदाने स्थानमाह ।

पाद्यं पादाम्बुजे दद्याद्द्याद्आचमनं मुखे ।
मधुपर्कं मुखाभ्यासे स्नानं सर्व्वकलेवरे ॥ १ ॥
कटौ वस्त्रं यथाशोभं यथास्थानेषु भूषणम् ।
हृदि गन्धं तथा पुष्पं मूर्ध्नि मालां गलेषु च ॥ २ ॥
अनुघ्राणं तथा धूपमनुचक्षु प्रदीपकम् ।
देवाग्रेषु च नैवेद्यं समीपे दृष्टिगोचरे ॥ ३ ॥
आदावाचनपुष्पञ्च उपचारं तदन्तरम् ।
मुद्राञ्च जलधाराञ्च मुखवासं प्रकल्पयेत् ।
जलधारां पुनर्दद्यादुपचारान्तरान्तरे ॥ ४ ॥

इति पूजास्थाननियमः ।

अथाष्टाङ्गप्रणामलक्षणम् ।

दोर्भ्यां पद्भ्याञ्च जानुभ्यामुरसा शिरसा दृशा ।
मनसा वचसा चेति प्रणामोऽष्टाङ्ग ईरितः ॥ १ ॥

इत्यष्टाङ्गप्रणामम् ।

अथ पञ्चाङ्गप्रणामलक्षणम्।

बाहुभ्याञ्चैव जानुभ्यां शिरसा वचसा धिया।

पञ्चाङ्गकृतप्रणामोऽयं पूजासु प्रवरा इमे ॥ २ ॥

इति पञ्चाङ्गप्रणामः।

## अथ षोढ़ान्यासोऽत्र लिख्यते।

गणेशग्रहनक्षत्रयोगिनीराशिपीठकैः।

युक्ता षोढ़ाभिधा न्यासाः प्रोक्ताः पूजकसत्तमाः ॥ १ ॥

अथ गणेशमातृकान्यासः।

गणेशमातृकामन्त्रस्य दक्षिणामूर्त्तिर्ऋषिर्गायत्री च्छन्दः श्रीमातृका सुन्दरी देवता ममोपास्यश्रीविद्याङ्गत्वेन षोढ़ान्यासे विनियोगः।

अं कं खं गं घं ङं आं ऐं हृत्। इं चं छं जं झं ञं ईं क्लीं शिरः। उं टं ठं डं ढं णं ऊं सौः शिखा। एं तं थं दं धं नं ऐं सौः कवचम्। ओं पं फं बं भं मं औं क्लीं नेत्रम्। अं यं रं लं वं शं षं सं हं क्षं अः ऐं अस्त्रम्।

ध्यानम्।

उद्यत्सूर्य्यसहस्राभां पीनोन्नतपयोधराम्।

रक्तमाल्याम्बरालेप-रक्तभूषणभूषिताम् ॥

पाशाङ्कुशधनुर्बाणभास्वत्पाणिचतुष्टयाम्।

रक्तनेत्रत्रयां स्वर्णमुकुटोद्भासिचन्द्रिकाम्।

एवं ध्यात्वा न्यसेत्स्वीयबीजपूर्व्वाक्षरान्वितम् ॥ १ ॥

विघ्नेशो ह्रीसमायुक्तो विघ्नराजः श्रिया युतः।

विनायकः पुष्टियुतः शान्तियुक्तः शिवोत्तमः ।
विघ्नकृत्स्वस्तिसंयुक्तो विघ्नहर्त्ता सरस्वती ॥ २ ॥
गणस्तु स्वाहया युक्त एकदन्तः सुमेधया ।
द्विदन्तः कान्तिसंयुक्तो गजवक्त्रश्च कामिनी ॥ ३ ॥
निरञ्जनो मोहिनीयुक्कपर्द्दी तु नटीयुतः ।
दीर्घजिह्वः पार्व्वतीयुक्छङ्कुकर्णश्च ज्वालिनी ॥ ४ ॥
वृषभध्वजनन्दे च सुरेशागणनायकौ ।
गजेन्द्रः कामरूपिण्या सूर्पकर्णस्तथोमया ॥ ५ ॥
त्रिलोचनस्तेजवत्या लम्बोदरस्तु सत्यया ।
महानन्दश्च विघ्नेशी चतुर्मूर्त्तिः सुरूपिणी ॥ ६ ॥
सदाशिवः कामदायुगामोदो मदजिह्वया ।
दुर्मुखो भूतिसंयुक्तः सुमुखो भौतिकायुतः ॥ ७ ॥
प्रमोदः सितया युक्त एकपादो रमायुतः ।
द्विजिह्वो महिषीयुक्तः शूरश्चापि तु भञ्जिनी ॥ ८ ॥
वीरो विकर्णया युक्तः षण्मुखो भ्रुकुटीयुतः ।
वरदो लज्जया वामदेवः स्याद्दीर्घघोणया ॥ ९ ॥
धनुर्धरावक्रतुण्डौ द्विरदो यामिनीयुतः ।
सेनानी रात्रिसंयुक्तः कामान्धो ग्रामणीयुतः ॥ १० ॥
मत्तः शशिप्रभायुक्तो विमत्तो लोललोचना ।
मत्तवाहनचञ्चले जटी दीप्तिसमन्वितः ॥ ११ ॥
मुण्डी सुभगया युक्तः खड्गी दुर्भगया तथा ।
वरेण्यश्च शिवायुक्तो भगयुग्वृषकेतनः ॥ १२ ॥
भक्तप्रियश्च भगिनी गणेशो भगिनीयुतः ।
मेघनादश्च सुभगा व्यासी स्यात्कालरात्रियुक् ॥ १३ ॥

गणेश्वरः कालिकेति प्रोक्ता विघ्नेशमातृकाः।

त्वगादियोगो यादीनां पूर्व्ववत्परिकीर्त्तितः॥ १४॥

त्वगादियोग इति गं यं त्वगात्मभ्यां जठ्ठिदीप्तिभ्यां नमः इत्यादि। यादियोगश्च पूर्व्ववदिति ॐ ह्रीं श्रीं क्लीं यं क्लीं श्रीं ह्रीं त्वगात्मभ्यां पुरुषोत्तमवसुदाभ्यां नमो हृदीत्यादि। यथा—गं अं विघ्नेशह्रीभ्यां नमः। गं आं विघ्नराजश्रीभ्यां नमः। इत्यादिमातृकास्थले न्यसेत्। इति गणेशमातृकान्यासः। १।

अथ ग्रहमातृकान्यासः।

ग्रहमातृकामन्त्रस्य दक्षिणामूर्त्तिर्ऋषिरित्यादि पूर्व्ववत् षड़ङ्गञ्च।

ध्यानम्।

रक्तं श्वेतं तथा रक्तं श्यामं पीतञ्च पाण्डुरम्।

धूम्रं कृष्णञ्च धूम्रञ्च धूमधूम्रं विचिन्तयेत्॥ १॥

रविमुख्यान् कामरूपान् सर्व्वाभरणभूषितान्।

वामोरुन्यस्तहस्तांश्च दक्षिणेन वरप्रदान्॥ २॥

एवं ध्यात्वा मातृकापूर्व्वान् ग्रहान्न्यसेत्। अं १६ सूर्य्याय रेणुकाम्बायै नमो हृदि॥ १॥ यं ४ चन्द्रायामृताम्बायै नमो भ्रूमध्ये॥ २॥ कं ५ मङ्गलाय धामाम्बायै नमो नेत्रयोः॥ ३॥ चं ५ बुधाय ज्ञानरूपाम्बायै नमो हृदि॥ ४॥ टं ५ बृहस्पतये यशस्विन्यम्बायै नमो हृदयोपरिभागे॥ ५॥ तं ५ शुक्राय शाकम्बर्य्यम्बायै नमः कण्ठे॥ ६॥ पं ५ शनैश्चराय शक्त्यम्बायै नमो नाभौ॥ ७॥ शं ४ राहवे कृष्णाम्बायै नमो मुखे॥ ८॥ लं क्षं केतवे धूम्राम्बायै नमो गुदे॥ ९॥

इति ग्रहमातृकान्यासः। २।

अथ नक्षत्रमातृकान्यासः।

नक्षत्रमातृकामन्त्रस्य दक्षिणामूर्त्तिर्ऋषिः गायत्री छन्दो नक्षत्ररूपिणी सुन्दरी देवता श्रीविद्याङ्गत्वेन न्यासे विनियोगः।

ध्यानम्।

ज्वलत्कालाग्निसङ्काशाः सर्व्वाभरणभूषिताः।
नतिपाश्वोऽश्विनीमुख्या वरदाभयपाणयः॥ १॥

एवं ध्यात्वा मातृकापूर्व्वं नक्षत्राणि न्यसेत्। यथा—अं आं अश्विन्यै नमो ललाटे॥ १॥ इं भरण्यै नमो दक्षनेत्रे॥ २॥ ईं उं ऊं कृत्तिकायै नमो वामनेत्रे॥ ३॥ ऋं ॠं लृं ॡं रोहिण्यै नमो दक्षनेत्रे॥ ४॥ एं मृगशिरसे नमो वामकर्णे॥ ५॥ ऐं आर्द्रायै नमो दक्षनसि॥ ६॥ ओं औं पुनर्वसवे नमो वामनसि॥ ७॥ कं पुष्याय नमः कण्ठे॥ ८॥ खं गं अश्लेषायै नमो दक्षस्कन्धे॥ ९॥ घं ङं मघायै नमो वामस्कन्धे॥ १०॥ चं पूर्व्वफाल्गुन्यै नमो दक्षकूर्परे॥ ११॥ छं जं उत्तरफाल्गुन्यै नमो वामकूर्परे॥ १२॥ झं ञं हस्तायै नमो दक्षमणिबन्धे॥ १३॥ टं ठं चित्रायै नमो वाममणिबन्धे॥ १४॥ डं स्वात्यै नमो दक्षहस्ते॥ १५॥ ढं णं विशाखायै नमो वामहस्ते॥ १६॥ तं थं दं अनुराधायै नमो नाभौ॥ १७॥ धं ज्येष्ठायै नमो दक्षकटौ॥ १८॥ नं पं फं मूलायै नमो वामकटौ॥ १९॥ बं पूर्व्वाषाढ़ायै नमो दक्षोरौ॥ २०॥ भं उत्तराषाढ़ायै नमो वामोरौ॥ २१॥ मं श्रवणायै नमो दक्षजानुनि॥ २२॥ यं रं धनिष्ठायै नमो वामजानुनि॥ २३॥ लं शतभिषायै नमो दक्षजङ्घायाम्॥ २४॥ वं शं पूर्व्वभाद्रपदायै नमो वामजङ्घायाम्॥ २५॥

षं सं हं उत्तरभाद्रपदायै नमो दक्षपादे ॥ २६ ॥ क्षं अं अः रेवत्यै नमो वामपादे ॥ २७ ॥ इति नक्षत्रमातृकान्यासः । ३ ।

सर्व्वेषु न्यासेष्वादौ मायाश्रीवीजे योज्ये । न्यासान्सर्व्वान् प्रकुर्व्वीत मायाश्रीवीजपूर्व्वकानिति वचनोक्तत्वादिति ।

अथ योगिनीमातृकान्यासः ।

योगिनीन्यासस्य मुनिच्छन्दसी पूर्व्वोक्ते, योगिनीरूपा सुन्दरी देवता श्रीविद्याङ्गत्वेन न्यासे विनियोगः ।

ध्यानम् ।

सितासितारुणा बभ्रूश्चित्रा पीताश्च चिन्तयेत् ।
चतुर्भुजाः समैर्वक्त्रैः सर्व्वाभरणभूषिताः ॥

एवं ध्यात्वा न्यसेत् । क्लीं श्रीं डां डीं डं मलवर यूं पूं डाकिन्यै नमः । अं १६ मम त्वचं रक्ष रक्ष त्वगात्मने नमः कण्ठदेशे विशुद्धे ॥ १ ॥ क्लीं श्रीं रां रीं रं मलवर यूं पूं राकिन्यै नमः । कं १२ मम रक्तं रक्ष रक्ष असृगात्मने नमो हृद्यनाहते ॥ २ ॥ लां लीं लं मलवर यूं पूं लाकिन्यै नमः । डं १० मम मांसं रक्ष रक्ष मांसात्मने नमो नाभौ मणिपूरे ॥ ३ ॥ कां कीं कं मलवर यूं पूं काकिन्यै नमः । बं ६ मम मेदो रक्ष रक्ष मेदआत्मने नमो लिङ्गमूले स्वाधिष्ठाने ॥ ४ ॥ शां शीं शं मलवर यूं पूं शाकिन्यै नमः । वं ४ ममास्थि रक्ष रक्ष अस्थ्यात्मने नमो मूलाधारे ॥ ५ ॥ हां हीं हं मलवर यूं पूं हाकिन्यै नमः । हं क्षं मम मज्जां रक्ष रक्ष मज्जात्मने नमो भ्रूमध्ये आज्ञाचक्रे ॥ ६ ॥ यां यीं यं मलवर यूं पूं याकिन्यै नमः । अं मम शुक्रं रक्ष रक्ष शुक्रात्मने नमो ब्रह्मरन्ध्रे ॥ ७ ॥

इति योगिनीमातृकान्यासः । ४ ॥

अथ राशिमातृकान्यासः ।

राशिमातृकामन्त्रस्य मुनिच्छन्दसी पूर्व्वोक्ते, राशिरूपा सुन्दरी देवता श्रीविद्याङ्गत्वेन न्यासे विनियोगः ।

ध्यानम् ।

रक्तश्वेतहरिद्वर्णपाण्डुचित्रासितान् स्मरेत् ।
पिशङ्गपिङ्गलौ बभ्रुकर्व्वुरासितधूम्रभान् ॥

एवं ध्यात्वा न्यसेत् । अं आं इं ईं मेषाय नमो दक्षपाद-गुल्फे ॥ १ ॥ उं ऊं ऋं वृषाय नमो दक्षजानुनि ॥ २ ॥ ॠं लृं ॡं मिथुनाय नमो दक्षवृषणे ॥ ३ ॥ एं ऐं कर्कटाय नमो दक्षकुक्षौ ॥ ४ ॥ ओं औं सिंहाय नमो दक्षस्कन्धे ॥ ५ ॥ अं अः शं षं सं हं कन्यायै नमो दक्षशिरोभागे ॥ ६ ॥ कं खं गं घं ङं तुलायै नमो वामशिरोभागे ॥ ७ ॥ चं छं जं झं ञं वृश्चिकाय नमो वामस्कन्धे ॥ ८ ॥ टं ठं डं ढं णं धन्विने नमो वामकुक्षौ ॥ ९ ॥ तं थं दं धं नं मकराय नमो वामवृषणे ॥१०॥ पं फं बं भं मं कुम्भाय नमो वामजानुनि ॥ ११ ॥ यं रं लं वं क्षं मीनाय नमो वामगुल्फे ॥ १२ ॥ इति राशिमातृकान्यासः । ५ ।

अथ पीठमातृकान्यासः ।

पीठमातृकामन्त्रस्य मुनिच्छन्दोऽङ्गानि पूर्व्ववत्, पीठ-रूपिणी सुन्दरी देवता श्रीविद्याङ्गत्वेन न्यासे विनियोगः ।

ध्यानम् ।

सितासितारुणश्यामहरित्पीतान्यनुक्रमात् ।
पुनरेतत्क्रमाद्देवि पञ्चाशत्स्थानसञ्चये ।
पीठानीह स्मरेद्विद्वान्सर्व्वकामार्थसिद्धये ॥ १ ॥

एवं ध्यात्वा मातृकास्थानेषु मातृकावर्णपूर्व्वाणि पीठानि

न्यसेत्। तानि यथा—क्लीं श्रीं अं कामरूपपीठाय नमः ॥ १ ॥ आं वाराणसीपीठाय नमः ॥ २ ॥ इं नैपालपीठाय नमः ॥ ३ ॥ ईं पौण्ड्रवर्द्धनपीठाय नमः ॥ ४ ॥ उं काश्मीरपीठाय नमः ॥ ५ ॥ ऊं कान्यकुब्जपीठाय नमः ॥ ६ ॥ ऋं पूर्णगिरिपीठाय नमः ॥७॥ ॠं अर्व्वुदाचलपीठाय नमः ॥ ८ ॥ ऌं आम्रातकेश्वरपीठाय नमः ॥ ९ ॥ ॡं एकाम्रपीठाय नमः ॥ १० ॥ एं त्रिस्रोतः-पीठाय नमः ॥ ११ ॥ ऐं कामकोटपीठाय नमः ॥ १२ ॥ ओं कैलासपीठाय नमः ॥ १३ ॥ औं भृगुपीठाय नमः ॥ १४ ॥ अं केदारपीठाय नमः ॥ १५ ॥ अः चन्द्रपुरपीठाय नमः ॥ १६ ॥ कं श्रीपीठाय नमः ॥ १७ ॥ खं ॐकारपीठाय नमः ॥ १८ ॥ गं जालन्धरपीठाय नमः ॥ १९ ॥ घं मालवपीठाय नमः ॥२०॥ ङं कुलान्तपीठाय नमः ॥ २१ ॥ चं देवीकोट्टकपीठाय नमः ॥ २२ ॥ छं गोकर्णपीठाय नमः ॥ २३ ॥ जं मारुतेश्वर-पीठाय नमः ॥ २४ ॥ झं अट्टहासपीठाय नमः ॥ २५ ॥ ञं विरजपीठाय नमः ॥ २६ ॥ टं राजगृहपीठाय नमः ॥ २७ ॥ ठं महापथपीठाय नमः ॥ २८ ॥ डं कोल्लगिरिपीठाय नमः ॥ २९ ॥ ढं एलापुरपीठाय नमः ॥ ३० ॥ णं कालेश्वर-पीठाय नमः ॥ ३१ ॥ तं जयन्तीपीठाय नमः ॥ ३२ ॥ थं उज्जयिनीपीठाय नमः ॥ ३३ ॥ दं चरित्रपीठाय नमः ॥ ३४ ॥ धं चीरिकापीठाय नमः ॥ ३५ ॥ नं हस्तिनापुरपीठाय नमः ॥ ३६ ॥ पं उड्डीशपीठाय नमः ॥ ३७ ॥ फं प्रयाग-पीठाय नमः ॥ ३८ ॥ बं षष्ठीशपीठाय नमः ॥ ३९ ॥ भं मायापुरपीठाय नमः ॥ ४० ॥ मं मलयपीठाय नमः ॥ ४१ ॥ यं श्रीशैलपीठाय नमः ॥ ४२ ॥ रं मेरुपीठाय नमः ॥ ४३ ॥

लं गिरिपीठाय नमः ॥ ४४ ॥ वं माहेन्द्रपीठाय नमः ॥ ४५ ॥ शं वामनपीठाय नमः ॥ ४६ ॥ षं हिरण्यपुरपीठाय नमः ॥४७॥ सं महालक्ष्मीपीठाय नमः ॥ ४८ ॥ हं उड्डियानपीठाय नमः ॥ ४९ ॥ ळं छायापीठाय नमः ॥ ५० ॥ क्षं क्षत्रपुर-पीठाय नमः ॥ ५१ ॥ इति पीठमातृकान्यासः । ६ ।

इति षोढ़ान्यासः समाप्तः ।

## अथ महाषोढ़ालक्षणम् ।

प्रपञ्चो भुवना मूर्त्तिः मन्त्रदैवतमातरः ।
महाषोढ़ा महान्यासः सर्व्वन्यासोत्तमोत्तमः ॥ १ ॥

ततो देवतासान्निध्यार्थं तत्त्वन्यासं कृत्वा—

ततो विचिन्तयेद्देवं परमात्मानमीश्वरम् ।
अतिसूक्ष्मतरं देवं ज्ञानरूपं सुरेश्वरम् ॥ १ ॥
एवं न्यस्य च तत्त्वानि प्रतिमायां पृथक् पृथक् ।
कारयेद्वैष्णवं विद्वानुपन्यासन्तु षोड़शम् ॥ २ ॥

तल्लक्षणमाह ।

प्रथमः प्रणवन्यासो व्याहृतिस्तु द्वितीयकः ।
तृतीयो मातृकान्यासश्चतुर्थस्तु ग्रहात्मकः ॥ १ ॥
पञ्चमः कालविन्यासः षष्ठो वर्णात्मकः स्मृतः ।
सप्तमस्तोयविन्यासो वेदन्यासस्तथाष्टमः ॥ २ ॥
विराट् च नवमो न्यासो दशमो देवतामयः ।
एकादशः क्रतुन्यासो द्वादशस्तु गुणात्मकः ॥ ३ ॥
त्रयोदशश्चायुधानो शक्तिन्यासश्चतुर्द्दशः ।
अङ्गानान्तु पञ्चदशो जीवन्यासस्तु षोड़शः ॥ ४ ॥

इति षोड़शन्यासाः ।

—

## अथ पुरुषसूक्तम् ।

ॐ पुरुषसूक्तमन्त्रस्य नारायण ऋषिः पञ्चदशर्च्चोऽनुष्टुप् छन्दः षोड़शात्त्रिष्टुप् छन्दः जगद्दीजं पुरुषो देवता पुरुषमेधे विनियोगः ।

ध्यानम् ।

ॐ ध्येयः सदा सवितृमण्डलमध्यवर्त्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान्मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥

ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं सर्व्वतस्पृत्वा अत्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥
पुरुष एवेदꣳ सर्व्वं यद्भूतं यच्च भव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥
एतावानस्य महिमा अतो ज्यायांश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ ३ ॥
त्रिपादूर्द्ध्वमुदैत्पुरुषः पादोऽस्येहाभवत्पुनः ।
ततो विष्वङ्व्यक्रामत्साशनानशने अभि ॥ ४ ॥
ततो व्विराड़जायत विराजो अधि पूरुषः ।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ५ ॥
तस्माद्यज्ञात्सर्व्वहुतः सम्भृतं पृषदाज्यम् ।
पशूंस्तांश्चक्रे वायव्यानारण्यान् ग्राम्याश्च ये ॥ ६ ॥
तस्माद्यज्ञात्सर्व्वहुत ऋचः सामानि जज्ञिरे ।
छन्दाꣳसि जज्ञिरे तस्माद् यजुस्तस्मादजायत ॥ ७ ॥
तस्मादश्वा अजायन्त ये के चोभयादतः ।
गावो ह जज्ञिरे तस्मात् तस्माज्जाता अजाऽवयः ॥ ८ ॥
तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः ।
तेन देवा अयजन्त साध्या ऋषयश्च ये ॥ ९ ॥

यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्।
मुखं किमस्य कौ बाहू का ऊरू पादा उच्येते ॥ १० ॥
ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः।
ऊरू तदस्य यद्वैश्यः पद्भ्याᳫं शूद्रो अजायत ॥ ११ ॥
चन्द्रमा मनसो जातश्चक्षोः सूर्य्यो अजायत।
मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत ॥ १२ ॥
नाभ्या आसीदन्तरिक्षᳫं शीर्ष्णो द्यौः समवर्त्तत।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ अकल्पयन् ॥ १३ ॥
यत्पुरुषेण हविषा देवा यज्ञमतन्वत।
वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ १४ ॥
सप्तास्यासन् परिधयस्त्रिःसप्त समिधः कृताः।
देवा यद्यज्ञं तन्वाना अवध्नन् पुरुषं पशुम् ॥ १५ ॥

यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन्।
ते ह नाकम्महिमानः सचन्त यत्र पूर्व्वे साध्याः सन्ति देवाः ॥ १६ ॥
अद्भ्यः सम्भृतः पृथिव्यै रसाच्च विश्वकर्म्मणः समवर्त्तताग्रे।
तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे ॥ १७ ॥
वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्।
तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यते अयनाय ॥ १८ ॥
प्रजापतिश्चरति गर्भे अन्तर्जायमानो बहुधा विजायते।
तस्य योनिं परिपश्यन्ति धीरास्तस्मिन्ह तस्थुर्भुवनानि विश्वा ॥ १९ ॥

यो देवेभ्यः आतपति यो देवानां पुरोहितः।
पूर्व्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये ॥ २० ॥
रुचं ब्राह्मं जनयन्तो देवा अग्रे तदब्रुवन्।
यस्त्वेवं ब्राह्मणो विद्यात्तस्य देवाय सन्वशे ॥ २१ ॥

श्रीश्च ते लक्ष्मीश्च पत्न्या अहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विन्।
नौव्यात्तं इष्णं नीषाणामुम्म इषाण सर्व्वलोकं म इषाण॥२२॥इति।

पुरुषसूक्तमिदं कथितं बुधैस्तदनु पञ्चसुरस्य च तान्त्रिकम्।
मनुमथो शिवपूजनपार्थिवं हवनवैश्वविधी क्रमतस्ततः॥

कथयामीति शेषः।

## अथ पञ्चदेवानां तान्त्रिकमन्त्राः।

### १ नारायणः।

अष्टाक्षरनारायणमन्त्रो यथा—

अष्टाक्षरनारायणमन्त्रस्य साध्यनारायण ऋषिः अनुष्टुप् छन्दः श्रीनारायणो देवता अकारो वीजम् उकारः शक्तिः मकारः कीलकम् अष्टाक्षरनारायणमन्त्रजपकर्म्मणि विनियोगः।

ॐ क्रुद्धोल्काय स्वाहा अङ्गुष्ठाभ्यां नमः। ॐ महोल्काय स्वाहा तर्ज्जनीभ्यां स्वाहा। ॐ वीरोल्काय स्वाहा मध्यमाभ्यां वषट्। ॐ दूरोल्काय स्वाहा अनामिकाभ्यां हूं। ॐ यन्नोल्काय स्वाहा कनिष्ठाभ्यां वौषट्। ॐ सहस्रोल्काय स्वाहा करतलकरपृष्ठाभ्यां फट्।

एवमङ्गन्यासः। अस्त्राय फड़िति विशेषः।

ध्यानम्।

अर्कौघाभं किरीटान्वितमकरलसत्कुण्डलं दीप्तराजत्-
केयूरं कौस्तुभाभाशवलरुचिरहारं सपीताम्बरञ्च।
नानारत्नांशुभिन्नाभरणशतयुतं श्रीधराश्लिष्टपार्श्वं
वन्दे दोःसक्तचक्राम्बुरुहदरगदं विश्ववन्द्यं मुकुन्दम्॥ १॥

मन्त्रः—ॐ नमो नारायणाय। इति

नारायणाष्टाक्षरतान्त्रिको मनुः।

२ गणेशः ।

षड़क्षरवक्रतुण्डमन्त्रस्य भार्गव ऋषिः अनुष्टुप् छन्दः श्रीवक्र-तुण्डो देवता जपे विनियोगः ।

ॐ वं वक्रतुण्डाय अङ्गुष्ठाभ्यां नमः । ॐ क्रं एकदन्ताय तर्ज्जनीभ्यां स्वाहा । ॐ तुं लम्बोदराय मध्यमाभ्यां वषट् । ॐ डां चलत्कर्णाय अनामिकाभ्यां हूं । ॐ यं गजवक्त्राय कनिष्ठाभ्यां वौषट् । ॐ हूं सर्व्वविघ्नेश्वराय करतलकरपृष्ठाभ्यां फट् ।

एवमङ्गन्यासः । अस्त्राय फड़िति विशेषः ।

ध्यानम् ।

पाशाङ्कुशाभयकरं वरदं दधानं
स्निग्धशोणसरविन्ददलायताक्षम् ।
अम्भोजिनीस्फुटगतं गणनाथमेव
ध्यायेत्प्रसन्नवदनाम्बुजमिन्दिरायै ॥

मन्त्रः—ॐ वक्रतुण्डाय हूं । इति

षड़र्णो मनुर्वक्रतुण्डस्य चायम्—

३ शिवः ।

ॐ अस्य श्रीशिवपञ्चाक्षरमन्त्रस्य वामदेव ऋषिः पङ्क्ति-श्छन्दः श्रीसदाशिवो देवता मं वीजं नं शक्तिः जपे विनियोगः ।

ॐ ॐ अङ्गुष्ठाभ्यां नमः । ॐ नं तर्ज्जनीभ्यां स्वाहा । ॐ मं मध्यमाभ्यां वषट् । ॐ शिं अनामिकाभ्यां हूं । ॐ वां कनिष्ठाभ्यां वौषट् । ॐ यं करतलकरपृष्ठाभ्यां फट् ।

एवमङ्गन्यासः । अस्त्राय फड़िति विशेषः ।

ध्यानम् ।

ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं
रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् ।
पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं
विश्वाद्यं विश्ववीजं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥
मन्त्रः—ॐ नमः शिवाय । इति
शिवस्येह पञ्चाक्षरो मन्त्रराजः ।—

४ दुर्गा ।

ॐ अस्य श्रीवनदुर्गामन्त्रस्य आरण्यक ऋषिः अनुष्टुप् छन्दः श्रीवनदुर्गा देवता हूं वीजं स्वाहा शक्तिः जपे विनियोगः ।

ॐ ऐं क्लीं श्रीं ह्रां ज्वल ॐ उत्तिष्ठ पुरुषि अङ्गुष्ठाभ्यां नमः । ॐ ह्रीं ज्वालिनीं ॐ किं स्वपिषि तर्ज्जनीभ्यां स्वाहा । ॐ ह्रूं प्रज्वालिनीं ॐ भयं मे समुपस्थितं मध्यमाभ्यां वषट् । ॐ ह्रैं शूलिनीं ॐ यदि शक्यमशक्यं हूं अनामिकाभ्यां हूं । ॐ ह्रः कपर्द्दिनीं ॐ दुर्गे भगवति शमय स्वाहा करतलकरपृष्ठाभ्यां फट् ।

एवमङ्गन्यासः । अस्त्राय फड़िति विशेषः ।

ध्यानम् ।

ध्यायेत्सुवर्णवर्णाभां त्रिनेत्रां चारुहासिनीम् ।
सर्व्वलक्षणसम्पन्नामर्द्धेन्दुकृतशेखराम् ॥ १ ॥
चतुर्भुजां शङ्खचक्रधरां बालां सुरूपिणीम् ।
उद्यत्त्रिशूलनिर्भिन्नमहिषां सिंहवाहिनीम् ॥ २ ॥
मुक्तादामलसत्कण्ठां मुनिभिः स्तुतिपाठकैः ।

सिद्धैर्देवगणैर्युक्तां कुमारीभिश्च सेविताम् ।
सर्व्वकामप्रदां दुर्गां वरदां भक्तवत्सलाम् ॥ ३ ॥

मन्त्रः—ॐ उत्तिष्ठ पुरुषि किं स्वपिषि भयं मे समुपस्थितं यदि शक्यमशक्यं हूं दुर्गे भगवति शमय स्वाहा । इति

शिवामन्त्र ऋद्धिप्रदः साधनञ्चैः—

५ सूर्य्यः ।

ॐ अस्याष्टाक्षरसूर्य्यमन्त्रस्य भार्गव ऋषिः अनुष्टुप् छन्दः श्रीसूर्य्यो देवता जपे विनियोगः ।

ॐ सत्याय तेजोज्वालामालिने हूं फट् स्वाहा अङ्गुष्ठाभ्यां नमः । ॐ ब्रह्मणे तेजोज्वालामालिने हूं फट् स्वाहा तर्ज्जनीभ्यां स्वाहा । ॐ विष्णवे तेजोज्वालामालिने हूं फट् स्वाहा मध्यमाभ्यां वषट् । ॐ रुद्राय तेजोज्वालामालिने हूं फट् स्वाहा अनामिकाभ्यां हूं । ॐ अग्नये तेजोज्वालामालिने हूं फट् स्वाहा कनिष्ठाभ्यां वौषट् । ॐ स्वर्गाय तेजोज्वालामालिने हूं फट् स्वाहा करतलकरपृष्ठाभ्यां फट् ।

एवमङ्गन्यासः । अस्त्राय फड़िति विशेषः ।

ध्यानम् ।

पद्माक्षयुग्माभयदानहस्तं
केयूरहाराङ्गदकुण्डलाढ्यम् ।
माणिक्यमौलिं दिननाथमीडे
बन्धूककान्तिं विलसत्त्रिनेत्रम् ॥

मन्त्रः—ॐ घृणिः सूर्य्य आदित्याय स्वाहा । इति

अथाष्टाक्षरः सूर्य्यमन्त्रः प्रदिष्टः ॥

## अथ पञ्चदेवानां वैदिकमन्त्रा लिख्यन्ते ।

१ नारायणः ।

ॐ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः दिवीव चक्षुराततम् ॥ १ ॥

२ गणेशः ।

ॐ गणानान्त्वा गणपतिꣳ हवामहे प्रियाणान्त्वा प्रियपतिꣳ हवामहे निधीनान्त्वा निधिपतिꣳ हवामहे वसो मम आहमजानि गर्भधं मा त्वमजासि गर्भधम् ॥ २ ॥

३ शिवः ।

ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मोक्षीय मामृतात् ॥ ३ ॥

४ दुर्गा ।

ॐ अम्बे अम्बिके अम्बालिके न मानयति कश्चन ।
ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् ॥ ४ ॥

५ सूर्यः ।

ॐ आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यञ्च ।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥५॥

## अथ पञ्चदेवगायत्री ।

१ नारायणः ।

ॐ वासुदेवाय विद्महे दामोदराय धीमहि तन्नो विष्णुः प्रचोदयात् ॥ १ ॥

इति विष्णुगायत्री ।

२ गणेशः ।

ॐ गणेश्वराय विद्महे वक्रतुण्डाय धीमहि तन्नो दन्ती प्रचोदयात् ॥ २ ॥

इति गणेशगायत्री ।

३ शिवः ।

ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात् ॥ ३ ॥ इति शिवगायत्री ।

४ दुर्गा ।

ॐ महादेव्यै विद्महे दुर्गायै धीमहि तन्नो देवी प्रचोदयात् ॥ ४ ॥ इति दुर्गागायत्री ।

५ सूर्य्यः ।

ॐ आदित्याय विद्महे मार्त्तण्डाय धीमहि तन्नः सूर्य्यः प्रचोदयात् ॥ ५ ॥ इति सूर्य्यगायत्री ।

---

## अथ मृत्तिकाशङ्करपूजाविधिः ।

विना भस्मत्रिपुण्ड्रेन विना रुद्राक्षमालया ।
विना मालूरपत्रेण विफलं शिवपूजनम् ॥ १ ॥

कामनोपलक्षे लिङ्गघटनम् ।

मृद्भस्मगोशकृत्पिण्डैस्तथा बालुकयापि वा ।
कृत्वा लिङ्गं सकृत्पूज्य वसेत्कल्पायुतं दिवि ॥ २ ॥

मृत्तिकानिरूपणम् ।

शुद्धदेशसमुद्भूतां मृदामाहरयेत्ततः ।
ॐ श्री अष्टमूर्त्तये नमः ।
इत्यनेनैव मन्त्रेण मृदमादाय यत्नतः ।
संशोध्य मृत्तिकां तत्र स्थापयेद्विधिपूर्व्वकम् ॥ ३ ॥
अथवा कृष्णपक्षस्य चतुर्द्दश्यां समानयेत् ।
पुनश्च माससमानेन ह्याहरेत्तावदेव च ॥ ४ ॥

इति शिवपुराणे ।

मृत्तिकानयनसमये भूमिप्रार्थना।

ॐ सर्व्वाधारधरे देवि त्वद्रूपां मृत्तिकामिमाम्।
गृहीष्यामि प्रसन्ना त्वं लिङ्गार्थं भव शोभना॥ ५॥

शिवलिङ्गघटनप्रमाणम्।

यवप्रमाणं लिङ्गन्तु प्रणालञ्च तथाक्रमम्।
शक्तिप्रमाणमेवञ्च अधश्च द्विगुणं भवेत्॥ ६॥

मृत्तिकापरिमाणम्।

मृत्तिकातोलकं ग्राह्यमथवा तोलकद्वयम्।
त्रिसूत्रस्य प्रमाणेन कारयेद्घटनं बुधः॥ ७॥

इति कालोत्तरे।

निषिद्धलिङ्गपूजाफलम्।

रोगी स्याद्वर्त्तुलाकारे वक्रे चैव धनक्षयः।
शक्तिहीने सुतो नष्टः कण्डूः स्याद्भग्नगे तथा॥ ८॥
स्थूलाग्रे च हरेदायुश्चर्पटे च धनक्षयः।
दीर्घाकारे दरिद्रः स्यात् खर्व्वे च मरणं भवेत्॥ ९॥

प्रातःकृत्यादि स्नानसन्ध्यादिकं यथाविधि समाप्य धौतपादः पूजास्थानं गत्वा आसनशुद्धिभूतशुद्धिप्राणायाममातृकान्यासान्तं कर्म्म विधाय—

ॐ अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः।
ये भूता विघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञया॥

इति पठित्वा गौरसर्षपान् भूमौ क्षिपेत्। ॐ विष्णुः ॐ विष्णुः ॐ विष्णुः इत्यादि समस्तमुच्चार्य्य अद्य अमुके मासि अमुके पक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकराशौ स्थिते भास्करे

अमुकराशौ स्थिते चन्द्रमसि एवं यथास्थानावस्थितेषु भौमादि-ग्रहयोगलग्नकरणमुहूर्त्तकांशकेषु एवंविधविशेषणविशिष्टायां पुण्यतिथौ अमुकसगोत्रः श्रीमान् अमुकदेवशर्म्मा (ब्राह्मणपक्षे शर्म्मा, क्षत्रियपक्षे वीरवर्म्मा, वैश्यपक्षे गुप्तः, शूद्रपक्षे दासः; ब्राह्मणस्त्रीपक्षे देवी, क्षत्रियस्त्रीपक्षे वीरवर्म्मिणी, वैश्यस्त्रीपक्षे गुप्ता, तथा शूद्रस्त्रीपक्षे दासी) अहं मम श्रीसदाशिवकृपया जन्मजन्मान्तरकृतसमस्तपापक्षयपूर्व्वकसकलशरीरारोग्यव्यवहितो-त्तरचिरञ्जीवित्वकामः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं श्रीकान्ति-पुष्टिपुत्त्रपौत्राद्यखिलमनोऽभीष्टसिद्ध्यर्थं भुक्तिमुक्तिफलप्राप्त्यर्थं श्रीभवानीशङ्करप्रीत्यर्थमेकसंख्यकपार्थिवलिङ्गसङ्घटनप्राणप्रतिष्ठा-पन-पूजनकरण-प्रतिज्ञामहं करिष्ये ।

ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमः ।

भवे भवे नातिभवे भवस्व मां भवोद्भवाय नमः ॥

इति मन्त्रं पठित्वा मृदाचूर्णितं कुर्य्यात् ।

ॐ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्व्वभूतदमनाय नमो मनोन्मनाय नमः । इति मन्त्रं पठित्वा मृत्तिकायां जलसेचनं कुर्य्यात् ।

ॐ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः सर्व्वतः सर्व्व-सर्व्वेभ्यो नमस्तेऽस्तु रुद्ररूपेभ्यः स्वाहा । इति मन्त्रं पठित्वा मृत्तिकासंयोजनं कुर्य्यात् ।

ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचो-दयात् । ॐ महेश्वराय नमः । इति पठन् लिङ्गसङ्घटनं कुर्य्यात् ।

ॐ ईशानः सर्व्वविद्यानामीश्वरः सर्व्वभूतानां ब्रह्माधिपति-

ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मेऽस्तु सदाशिवोम्। इति मन्त्रं पठन्मूर्त्तिरचनां जलविन्दुना सम्यक्कुर्य्यात्।

ॐ सद्यः समस्ताघनाशनेति शिरसानम्य ताम्रपात्रे विल्वदलं निधाय तदुपरि साक्षतपुष्पं लिङ्गं संस्थाप्य शिवमस्तकवज्रत्यागं कुर्य्यात्। यथा—

ॐ वज्रं त्यज महाबाहो कामनासिद्धिहेतवे।
यावत्त्वां पूजयिष्यामि तावत्त्वं सुस्थिरो भव ॥ १ ॥

इति मन्त्रं पठित्वा शिवलिङ्गस्पर्शनं कुर्य्यात्। इति वज्रमोचनम्।

निम्नलिखितमन्त्रं पठित्वा जलदानम्।

इन्द्रियैर्यः परित्यक्तो वेदैश्च परिवर्ज्जितः।
वेदान्तैश्च परित्यक्तस्तस्मै ब्रह्मात्मने नमः ॥ इति।

ततः पुष्पाक्षतदानमन्त्रः।

ॐ आं आत्मतत्त्वाय नमः आत्मतत्त्वाधिपाय ब्रह्मणे नमः। ॐ वां विद्यातत्त्वाय नमः विद्यातत्त्वाधिपाय विष्णवे नमः। ॐ शिं शिवतत्त्वाय नमः शिवतत्त्वाधिपाय रुद्राय नमः। इति मन्त्रं पठित्वा पुष्पाक्षतं शिवोपरि दद्यात्।

ॐ शिवाय अङ्गुष्ठाभ्यां नमः। ॐ भवाय तर्ज्जनीभ्यां स्वाहा। ॐ शर्व्वाय मध्यमाभ्यां वषट्। ॐ पशुपतये अनामिकाभ्यां हूं। ॐ महादेवाय कनिष्ठाभ्यां वौषट्। ॐ ईशानाय करतलकरपृष्ठाभ्यां फट्।

एवं हृदयादिन्यासः। अस्त्राय फड़िति विशेषः।

तत्पश्चात्कुशत्रयं गृहीत्वा वक्ष्यमाणमन्त्रेण मूलमध्याग्राणि संस्पृश्य प्राणप्रतिष्ठां कुर्य्याद्यथा—

ॐ अस्य श्रीशूलपाणेः प्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा

ऋषयः ऋग्यजुःसामानि छन्दांसि चैतन्यस्वरूपिणी जगत्सृष्टि-प्राणशक्तिर्देवता आं बीजं क्रीं शक्तिः क्रौं कीलकं शूलपाणेः प्राणप्रतिष्ठार्थे विनियोगः ।

करन्यासो यथा ।

ॐ अं कं खं गं घं ङं आं पृथिव्यप्तेजोवाय्वाकाशात्मने अङ्गुष्ठाभ्यां नमः । ॐ इं चं छं जं झं ञं ईं शब्दस्पर्शरूपरसगन्धात्मने तर्ज्जनीभ्यां स्वाहा । ॐ उं टं ठं डं ढं णं ऊं श्रोत्रत्वक्चक्षू-रसनाघ्राणात्मने मध्यमाभ्यां वषट् । ॐ एं तं थं दं धं नं ऐं वाक्पाणिपादपायूपस्थात्मने अनामिकाभ्यां हूं । ॐ ओं पं फं बं भं मं औं वचनादानगतिविसर्गानन्दात्मने कनिष्ठाभ्यां वषट् । ॐ अं यं रं लं वं शं षं सं हं लं क्षं अः करतलकरपृष्ठाभ्यां फट् ।

एवमङ्गन्यासः । अस्त्राय फडिति विशेषः ।

ध्यानम् ।

रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरूढा कराब्जैः
पाशान् कोदण्डमिक्षूद्भवमभयवरावङ्कुशं पञ्चवाणान् ।
बिभ्राणासृक्कपालं त्रिनयनविलसत्पीनवक्षोरुहाढ्या
देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः ॥

अथ प्राणप्रतिष्ठापनमन्त्रः ।

ॐ आं क्रीं क्रौं यं रं लं वं शं षं सं ह्रौं ॐ क्षं सं हंसः ह्रौं ॐ हंसः शूलपाणेः प्राणा इह प्राणाः । पुनरुक्तमन्त्रमुच्चार्य्य शूलपाणेर्जीव इह स्थितः । पुनरुक्तमन्त्रमुच्चार्य्य शूलपाणेः सर्व्वे-न्द्रियाणीह स्थितानि । पुनरुक्तमन्त्रमुच्चार्य्य शूलपाणेर्वाङ्मन-श्चक्षुःश्रोत्रत्वक्जिह्वाघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा । इति प्राणप्रतिष्ठापनम् ।

अथावाहनम्।

ॐ त्वं सं हंसः क्रीं ॐ पिनाकधृषे नमः। पिनाकधृषमावाहयामि पिनाकधृक् अत्रागच्छ इह तिष्ठ अत्राधिष्ठानं कुरु सत्कृतां पूजां गृहाण।

शिवप्रार्थना।

आयाहि भगवन्देव लोकानुग्रहकारक।
पूजयामि यथाशक्ति प्रसीद परमेश्वर॥ १॥
स्वामिन्सर्व्वजगन्नाथ यावत्पूजावसानकम्।
तावत्त्वं प्रीतभावेन लिङ्गेऽस्मिन्सन्निधिं कुरु॥ २॥

इत्युच्चार्य्य त्रिवारं पुष्पं दातव्यम्।

ॐ भूः पुरुषमावाहयामि ॐ भुवः पुरुषमावाहयामि ॐ स्वः पुरुषमावाहयामि ॐ भूर्भुवः स्वः पुरुषमावाहयामि आयातु भगवान्महादेवः।

अत्रावाहनादिदशमुद्रा दर्शनीयाः।

आवाहनं स्थापनञ्च सन्निधानं प्रकीर्त्तितम्।
स्यात्सन्निरोधः सकलीकरणञ्चावगुण्ठनम्॥ १॥
धेनुपीयूषकरणं महामुद्रा तथैव च।
परमीकरणञ्चैव दश मुद्राः प्रकीर्त्तिताः॥ २॥

आसां लक्षणमाह।

सम्यक्सम्पूजितैः पुष्पैः कराभ्यां कल्पिताञ्जलिः।
आवाहनी समाख्याता मुद्रा देशिकसत्तमैः॥ १॥
अधोमुखीकृता सैव स्थापनीति निगद्यते॥ २॥
आश्लिष्टमुष्टियुगला प्रोन्नताङ्गुष्ठयुग्मका।
सन्निधाने समुद्दिष्टा मुद्रेयं तत्त्ववेदिभिः॥ ३॥

अङ्गुष्ठगर्भिणी सैव सन्निरोधे समीरिता ॥ ४ ॥

देवाङ्गेषु षड़ङ्गानां न्यासः स्यात्सकलीकृतिः ॥ ५ ॥

यथा वा—हृदयादिशरीरान्ते कनिष्ठाद्यङ्गुलीषु च।

हृदादिमन्त्रविन्यासः सकलीकरणं मतम् ॥ ५ ॥

सव्यहस्तकृता मुष्टिः दीर्घाधोमुखतर्ज्जनी।

अवगुण्ठनमुद्रेयमभितो भ्रामिता भवेत् ॥ ६ ॥

अन्योऽन्याभिमुखौ श्लिष्टौ कनिष्ठानामिका पुनः।

तथा तु तर्ज्जनी मध्या धेनुमुद्रा प्रकीर्त्तिता ॥ ७ ॥

अमृतीकरणं कुर्य्यात्तया देशिकसत्तमः ॥ ८ ॥

अन्योऽन्यग्रथिताङ्गुष्ठा प्रसारितकराङ्गुली:।

महामुद्रेयमुदिता, परमीकरणं बुधैः ॥ ९ ॥

तया कुर्य्यादिति प्रोक्तं मन्त्रशास्त्रविशारदैः ॥ १० ॥

पुनः षोड़श मुद्राः।

आवाहनी(१) चन्द्रकर्णी(२) महामुद्रा(३) च निष्ठुरा(४)।

कालकर्णी(५) लिङ्गमुद्रा(६) योनिमुद्रा(७) कपालिका(८) ॥ १ ॥

ततस्त्रिशूल(९)खट्वाङ्ग(१०)खड्ग(११)पाशा(१२)ङ्कुशा(१३)भयाः(१४)।

वरदा(१५) धेनु(१६)रित्येताः निजमुद्राः शिवस्य तु ॥ २ ॥

अथ षोड़शमुद्रालक्षणानि।

शैवमुद्रास्तथा वक्ष्ये शिवप्रीतिप्रदायिकाः।

प्रसारितोत्तानहस्तौ श्लिष्टौ चावाहनी स्मृता ॥ १ ॥

तर्ज्जन्यग्रन्तु यष्टाग्रे यत्नेन विनियोजयेत्।

उत्तानौ तु करौ कृत्वा दर्शयेच्छशिकर्णिका ॥ २ ॥

हस्ताभ्यां संस्पृशेत्पादावूर्द्धं पादात्तु मस्तकम्।

ततः पादावधिं यावन्महामुद्रेति सा स्मृता ॥ ३ ॥

निपीड़येत्तथाङ्गुष्ठौ हस्तयोरुभयोरपि ।
उभौ चाङ्गुलिगर्भस्थौ निष्ठुरा सा प्रकीर्त्तिता ॥ ४ ॥
अङ्गुष्ठौ चोन्नतौ कृत्वा हस्तौ चान्योऽन्यसंयुतौ ।
उभौ चाभिमुखौ कृत्वा कालकर्णीं प्रदर्शयेत् ॥ ५ ॥
अङ्गुष्ठमुन्नतङ्कृत्वा मुष्टिपाणौ च दक्षिणे ।
अङ्गुष्ठं प्रक्षिपेन्मध्ये वामहस्तस्य मन्त्रवित् ॥
दक्षिणं मुष्टिमाच्छाद्य शेषैरङ्गुलिभिः क्रमात् ।
लिङ्गमुद्रा महावीर्य्या प्रयोज्या लिङ्गपूजने ॥ ६ ॥
अङ्गुल्यः करयुग्मस्य सम्प्रसार्य्य प्रबन्धयेत् ।
मध्यपृष्ठगते वामे तर्ज्जनीभ्यां निरोधयेत् ॥
मध्यमाग्रतमे कृत्वा कनिष्ठे मध्यमोपरि ।
तयोरुपरि चाङ्गुष्ठौ मुद्रा योनिस्तु खेचरी ॥ ७ ॥
उत्तानमञ्जलिं कृत्वा कपाली परिकीर्त्तिता ॥ ८ ॥
कनिष्ठामाक्रमेद्देवि अङ्गुष्ठेन समन्विताम् ।
सारयेदङ्गुलीस्तिस्रस्त्रिशूलं परिकीर्त्तितम् ॥ ९ ॥
तिर्य्यक्कृत्वा करं वामं कनिष्ठानाममध्यमाः ।
अङ्गुष्ठेनाक्रमेद्देवि ऋजुङ्कृत्वा प्रदेशिनीम् ॥
सम्मुखन्तु करङ्कृत्वा स्कन्धदेशे नियोजयेत् ।
खट्वाङ्गः कथितो ह्येषः, खड्गमुद्रां निबोधत ॥ १० ॥
अङ्गुष्ठेनाक्रमेद्देवि कनिष्ठां वा त्वनामिकाम् ।
विमुच्य तर्ज्जनीं मध्यां खड्गमुद्रा प्रकीर्त्तिता ॥ ११ ॥
पाशाकारं नियोज्यैव वामाङ्गुष्ठाग्रतर्ज्जनीम् ।
दक्षिणे मुष्टिमादाय तर्ज्जनीञ्च प्रसारयेत् ॥

तेनैव संस्पृशेन्मन्त्री वामाङ्गुष्ठं समूलकम् ।
पाशस्तु कथितो ह्येषः, अङ्कुशञ्च निबोधत ॥ १२ ॥
मुष्टिङ्कृत्वा तु देवेशि आकुञ्च्य त्यक्ततर्ज्जनीम् ।
अङ्कुशः कथितो ह्येषोऽभीतिमुद्रां निबोधत ॥ १३ ॥
अग्रं प्रसारितं कृत्वा श्लिष्टशाखन्तु देशिकः ।
प्राङ्मुखन्तु करं कृत्वा अभयः परिकीर्त्तितः ॥ १४ ॥
दक्षं भुजं प्रसारित्वा जानूपरि निवेशयेत् ।
प्रसृतं दर्शयेद्विद्वान्वरः सर्व्वार्थसाधकः ॥ १५ ॥
अन्योऽन्याभिमुखी श्लिष्टौ कनिष्ठानामिका पुनः ।
तथा तु तर्ज्जनी मध्या धेनुमुद्रा प्रकीर्त्तिता ॥ १६ ॥

इति शिवषोड़शमुद्रालक्षणम् ।

स्वस्य वामभागे जलपूर्णकलशं स्थापयेत्सर्व्वोपचारान्दक्षिण-भागे च । ॐ सर्व्वं विश्वा भूतान्यापः प्राणावापः पशव आपो-ऽन्नमापोऽमृतमापः सम्राड़ापो विराड़ापः छन्दाᳪस्यापो ज्योती रुद्रस्यापः यजूᳪष्यापः सत्यमापः सर्व्वा देवतापो भूर्भुवः स्वरोम् । इत्युच्चार्य्याभिमन्त्र्य गन्धाक्षतैः सम्पूज्य—

कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ।
मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ १ ॥
कुक्षौ तु सागराः सप्त सप्तद्वीपवसुन्धरा ।
ऋग्वेदोऽथ यजुर्व्वेदस्सामवेदो ह्यथर्व्वणः ॥ २ ॥
अङ्गैस्तु सहितास्सर्व्वे कलशन्तु समाश्रिताः ।
आयान्तु शिवपूजार्थं दुरितक्षयकारकाः ॥ ३ ॥
गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्म्मदे सिन्धु कावेरि जलेऽस्मिन्सन्निधिं कुरु ॥ ४ ॥

इति कलशे सर्व्वतीर्थान्यावाह्य ततस्तैर्जलैस्तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात् इति रुद्र-गायत्र्या स्वशरीरं पूजासम्भारांश्च सम्प्रोच्य स्वशरीरे न्यासं कुर्य्या-त्तदाह—

ॐ सद्योजातं प्रपद्यामीति मन्त्रेण अङ्गुष्ठाभ्यां नमः। ॐ वामदेवायेति मन्त्रेण तर्ज्जनीभ्यां स्वाहा। ॐ अघोरेभ्योऽथ घोरेभ्य इति मन्त्रेण मध्यमाभ्यां वौषट्। ॐ तत्पुरुषायेति मन्त्रेण अनामिकाभ्यां हूं। ॐ ईशान इति मन्त्रेण करतलकर-पृष्ठाभ्यां फट्।

एवं हृदयाद्यङ्गन्यासः। अस्त्राय फड़िति विशेषः।

ध्यानम्।

ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं
रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम्।
पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं
विश्वाद्यं विश्ववीजं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम्॥ १॥
कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम्।
सदा रमन्तं हृदयारविन्दे भवं भवानीसहितं नमामि॥ २॥
कैलासपीठासनमध्यसंस्थं भक्तैश्च नन्द्यादिभिरीड्यमानम्।
भक्तार्त्तिदावानलमप्रमेयं ध्यायेदुमालिङ्गितविश्वमूर्त्तिम्॥ ३॥
यथोक्तरूपिणं देवं ध्यायामि च शिवं मुदा।
कैलासशिखराद्रम्यात्समागच्छ मम प्रभो॥ ४॥
पूजाञ्चेमां गृहीत्वा च यथोक्तवरदो भव।
यथोक्तरूपिणं देवं शिवमावाहयाम्यहम्॥ ५॥

इति ध्यानम्।

ॐ सद्योजातमिति मन्त्रं पठित्वा आसनम्। ॐ यो रुद्रः अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवनानि वेश तस्मै रुद्राय नमो अस्तु इति पाद्यपात्रमभिमन्त्र्य सह पवित्रेणादित्यं दर्शयित्वा ॐ भवे भवे नातिभवे भवस्व मां भवोद्भवाय नमः इति पाद्यं समर्पयामि।

पुनर्यो रुद्र अग्नौ य इति समस्तमुच्चार्य्य अर्घपात्रमभिमन्त्र्य प्रक्षाल्य तिरः पवित्रमप आनीय तेनैवापोभिरभिमन्त्र्य सह पवित्रेणादित्यं दर्शयित्वा भवोद्भवाय नमः इत्याचमनम्। आपो हि ष्ठेति मन्त्रेण शुद्धोदकस्नानम्। ततः पञ्चामृतस्नानम्। ततः सद्योजातमित्याद्यादिपञ्चब्रह्मात्मकमन्त्रैः स्नानम्। स्नानानन्तरं शिवाय नमः इति पठित्वा ऐक्यचिन्तनम्।

तर्पणम्।

ॐ भवं देवं तर्पयामि। ॐ सर्व्वं देवं तर्पयामि। ॐ ईशानं देवं तर्पयामि। ॐ पशुपतिं देवं तर्पयामि। ॐ रुद्रं देवं तर्पयामि। ॐ उग्रं देवं तर्पयामि। ॐ भीमं देवं तर्पयामि। ॐ महादेवं तर्पयामीत्यष्टभिस्तर्पणं कुर्य्यात्।

ॐ ज्येष्ठाय नमः वस्त्रं समर्पयामीति वस्त्रम्। ॐ रुद्राय नमः उपवीतं समर्पयामीति उपवीतम्।

अथ चन्दनम्।

परमानन्दसौरभ्यपरिपूर्णदिगन्तरम्।
गृहाण परमं गन्धं कृपया परमेश्वर॥

ॐ कालाय नमश्चन्दनं समर्पयामि। ॐ नमः शिवाय गन्धं समर्पयामि नमः इति। बलाय नमः अक्षतान्समर्पयामि इति मन्त्रेण शिवोपरि अक्षतान्दद्यात्।

अथ विल्वदलार्पणम् ।

त्रिदलं त्रिगुणाकारं त्रिनेत्रञ्च त्रयायुधम् ।
त्रिजन्मपापसंहारमेकविल्वशिवार्पणम् ॥
ॐ कलविकरणाय नमः विल्वपत्राणि समर्पयामि ।

अथ त्यागविधिः ।

दलं दत्वा दलं त्यक्त्वा हस्तसम्मार्ज्जनं ततः ।
एतेन येन दातव्यं न जाने तस्य किं फलम् ॥

अथ पुष्पम् ।

तुरीयवनसम्भूतं नानागुणमनोहरम् ।
आनन्दं सौरभं पुष्पं गृह्यतामिदमुत्तमम् ॥
ॐ बलविकरणाय नमः पुष्पं समर्पयामि ।

अथ धूपः ।

वनस्पतिरसो दिव्यो गन्धाढ्यः सुमनोहरः ।
आघ्रेयः सर्व्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥
ॐ बलाय नमः धूपं समर्पयामीति धूपः ।

अथ धूपयोग्यायोग्यविधिः ।

गोरोचनं घृतं गव्यं गुग्गुलुं दारुमुत्तमम् ।
न शल्लकाजातं धूपं दद्यादासवसंयुतम् ॥ १ ॥
प्रदत्तं शम्भवे धूपं कालेयं रक्तचन्दनम् ।
नृणां भवति रोगाय न दद्यात्तत्कपर्द्दिने ॥ २ ॥

अथ दीपः ।

सुप्रकाशो महादीपः सर्व्वतस्तिमिरापहः ।
सवाह्याभ्यन्तरज्योतिर्दीपोऽयं प्रतिगृह्यताम् ॥

ॐ बलप्रमथनाय नमः दीपं समर्पयामि । ॐ नमः शिवाय दीपः स्वाहा ।

नैवेद्यम् ।

निवेदयामि भगवन् गृहाणेदं हविर्हर ।

ॐ अमृतोपस्तरणमसीति नैवेद्यफलादिकं प्रक्षिपेन्मुहूर्त्तमनवेक्षमाण आसीनो हविरुद्वासमर्पयामि अमृतापिधानमसीति प्रतिपदं कृत्वा सर्व्वभूतदमनाय नमः नैवेद्यं समर्पयामि ॐ नमः शिवाय नैवेद्यं स्वाहा । इति नैवेद्यम् ।

आचमनम् ।

मनोन्मनाय नमः आचमनं समर्पयामि ।

ताम्बूलम् ।

ॐ प्रभवे नमस्ताम्बूलं समर्पयामि इति ।

नीराजनम् ।

प्रभवे नमः नीराजनं समर्पयामि इति ।

नमस्कारः ।

प्रभवे नमः नमस्कारान्समर्पयामि ।

इति साष्टाङ्गनमस्कारः ।

अथावरणपूजा ।

ॐ क्रौं सद्योजाताय नमः । ॐ क्रैं वामदेवाय नमः । ॐ क्रूं अघोराय नमः । ॐ क्रीं तत्पुरुषाय नमः । ॐ क्रः ईशानाय नमः । इति पञ्चधा शिरसि पूजनम् ।

अष्टदलेषु । ॐ नन्दिने नमः । ॐ भृङ्गरिटिने नमः । ॐ गणेशाय नमः । ॐ महाकालाय नमः ।

इति द्वारपालपूजा ।

अनन्तरं पूर्व्वादिक्रमेण शिववामावर्त्तेनाष्टदिक्षु पूजयेत्। ॐ सर्व्वाय क्षितिमूर्त्तये नमः। ॐ भवाय जलमूर्त्तये नमः। ॐ रुद्राय तेजोमूर्त्तये नमः। ॐ उग्राय वायुमूर्त्तये नमः। ॐ भीमायाकाशमूर्त्तये नमः। ॐ पशुपतये यजमानमूर्त्तये नमः। ॐ महादेवाय सोममूर्त्तये नमः। ॐ ईशानाय सूर्य्यमूर्त्तये नमः। इत्यष्टमूर्त्तिपूजा।

ततो वामे गौर्य्यै नमः। दक्षिणे नन्दिकेश्वराय नमः। मध्ये साङ्गोपाङ्गाय सायुधाय सवाहनाय सपरिवाराय ॐ शिवाय नमः। इति पूजा।

अथ जपः।

ॐ अस्य श्रीसदाशिवपञ्चाक्षरमन्त्रस्य वामदेव ऋषिर्देवी पङ्क्तिश्छन्दः श्रीसदाशिवो देवता मम भुक्तिमुक्तिप्राप्तये जपे विनियोगः।

ततः शिवपञ्चाक्षरमन्त्रस्य यथाशक्ति जपः। जपान्ते—

गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम्।
सिद्धिर्भवतु मे देव त्वत्प्रसादान्महेश्वर॥

अनेन जपेन शिवः प्रीयतामिति आचमनीयमापस्त्यजेत्। ततो मुखवाद्यं वं वं वं महादेव शम्भो जय भोले। साष्टाङ्गनमस्कारः।

अहं पापी भवानश्च पावनश्च महान् भवान्।
इति विज्ञाय देवेश यथेच्छसि तथा कुरु॥

अर्द्धप्रदक्षिणं शिवाय स्वस्ति इति शिरसि पुष्पाक्षतं निवारं दत्त्वा चण्डेश्वराय नमः इति नैवेद्यावशेषं भूमौ क्षिपेत्। कर्पूरारतिं दद्यात्।

## अथ त्वरितरुद्रस्य विधानमभिधीयते ।

न वेदे नागमे चेदृग्मन्त्रस्त्वरितसिद्धिदः ।

मन्त्रः—ॐ यो रुद्रः अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवनानि वेश तस्मै रुद्राय नमो अस्तु ।

अथाथर्व्वमुनिप्रोक्तं छन्दोऽनुष्टुबुदाहृतम् ।
देवता त्वरितो रुद्रः षड़ङ्गानि न्यसेत्क्रमात् ॥ १ ॥
अत्र न्यासस्तु पञ्चाङ्गः पञ्चत्रिंशद्रुद्रगोः ।
वर्णान् हृदादिषु न्यस्याङ्गुष्ठादौ ध्यानमाचरेत् ॥ २ ॥

यथा—ॐ यो रुद्रः अग्नौ अङ्गुष्ठाभ्यां नमः । यो अप्सु तर्ज्जनीभ्यां नमः । य ओषधीषु मध्यमाभ्यां नमः । यो रुद्रो विश्वा भुवनानि वेश अनामिकाभ्यां नमः । तस्मै रुद्राय नमो अस्तु करतलकरपृष्ठाभ्यां नमः । इति करन्यासः ।

एवं हृदाद्यङ्गन्यासः ।

### ध्यानम् ।

चतुर्भुजं त्रिनेत्रञ्च शुद्धस्फटिकसन्निभम् ।
अमृतेन च सम्पूर्णौ कलशौ हस्तयोर्द्वयोः ॥ १ ॥
हस्तद्वयेन योगस्य कृतमुद्रास्थिरासनम् ।
सर्व्वकामफलेशानं शङ्करं करुणानिधिम् ॥ २ ॥
उग्रकर्म्मस्वुपमूर्त्तिज्वलत्पावकलोचनम् ।
द्विभुजं नागहस्तञ्च शूलपाणिं जटाधरम् ॥ ३ ॥

इति ध्यानम् ।

अधःशय्यामेकवारं हविष्यान्नस्य भोजनम् ।
ब्रह्मचर्य्यं सत्यवाणी पुरश्चर्य्याविधौ चरेत् ॥ १ ॥

लक्षमेकं जपेन्मन्त्रं होमोऽर्कसमिधो घृतम् ।
तर्पणं मार्ज्जनं विप्रभोजनं मन्त्रसिद्धये ॥ २ ॥
पूजा पार्थिवलिङ्गस्य प्राग्वन्नित्यं समाचरेत् ।
एवं सिद्धे मनौ मन्त्री प्रयोगान् कर्त्तुमर्हति ॥ ३ ॥
अयुतद्वयहोमेन या सिद्धिस्तन्निगद्यते ।
औदुम्बरैरन्नकामस्तेजस्कामस्तु खादिरैः ॥ ४ ॥
अपामार्गसमिद्धोमाद्भूतबाधा विनश्यति ।
ग्रहबाधानिरासाय जपेदश्वत्थसन्निधौ ॥ ५ ॥
लवणान्वितदध्यक्तास्तीक्ष्णाग्रा बोधिसम्भवाः ।
हूयन्ते समिधः शुष्काः स्वाहान्तं मन्त्रमुच्चरन् ॥ ६ ॥
दशपञ्चाहुतीर्हुत्वा गच्छ गच्छेत्युदीरयेत् ।
यावद्धोमं बलिं दत्त्वा पुरुषाहारसम्मितम् ॥ ७ ॥
एवङ्कृते तु तत्स्थानं पुरुषं वा स मुञ्चति ।
जुहुयाच्छतपुष्पाणि स हृष्टोऽभीष्टमाप्नुयात् ॥ ८ ॥
लाजाहोमेन कन्यार्थी कन्यां प्राप्नोति रूपिणीम् ।
लाजाश्च मधुसंयुक्ताः श्वेतपुष्पाणि वा पुनः ॥ ९ ॥
हूयन्ते हरिते देशे तस्य विश्वं वशीभवेत् ।
वा मन्त्रमत्र तं कार्य्यं स्त्रीवश्यं तुष्कदक्षिणम् ॥ १० ॥
अरिसैन्यप्रशान्त्यर्थं तिलानाज्येन सम्मितान् ।
होमस्थाने तु संस्थाप्य कुम्भमेकं जलान्वितम् ॥ ११ ॥
मन्त्रयित्वाष्टसाहस्रं शाखाः कुम्भे विनिक्षिपेत् ।
अभिषिकञ्च तैस्तेषां प्रोक्ष्य चैव प्रदक्षिणम् ॥ १२ ॥
गृहग्रामादिशान्त्यर्थं राज्यस्याप्येवमाचरेत् ।
वास्तुपूजा प्रकर्त्तव्या चतुःषष्टिपदैः शुभैः ॥ १३ ॥

ईशानाय बलिः कार्य्यो भूतानां पतये तथा।
एवङ्कृते पशूनान्तु प्रजानां शान्तिमाप्नुयात्॥ १४॥
अद्भुतेषु च सर्व्वेषु निशायां ग्रामवाह्यतः।
उपविश्य जपेद्रुद्रं त्वरितं बहुभिः सह॥ १५॥
होमः पलाशसमिधैः कर्त्तव्यो घृतसंयुतैः।
ईशानाय बलिः कार्य्यो यस्यां दिशि तदद्भुतम्॥ १६॥
ततो दिशां पतेस्तत्र पशूनां पतये तथा।
वृष्टिकामो जपेल्लक्षं तिलहोमो घृतान्वितः॥ १७॥
बलिपूजा च कर्त्तव्या शिवस्य वरुणस्य च।
यस्य कस्यापि कार्य्यस्य दृश्यतेऽयोग्यता यदि॥ १८॥
तदा लक्षार्द्धतो लक्षपर्य्यन्तं त्वरितं जपेत्।
सर्व्वान् कामानवाप्नोति त्वरितस्य प्रसादतः॥ १९॥
श्रीकामः शान्तिकामो वा जपेल्लक्षमतन्द्रितः।
श्रीकामो विल्वसमिधैः शान्तिकामः शमीमयैः॥ २०॥
जुहुयादाज्यसम्मिश्रैस्तर्पणं मार्ज्जनं तथा।
एवं सर्व्वेषु कार्य्येषु होमं कार्य्यं तथा यवैः॥ २१॥
जुहुयाल्लक्षमेकन्तु पुत्त्रार्थी पायसेन तु।
विद्यार्थी श्रीफलैस्तद्वदायुःकामस्तु दूर्व्वया॥ २२॥
तिलैरथाज्यसम्मिश्रैस्तेजस्कामस्तु सर्पिषा।
व्रीहिभिः पुष्टिकामस्तु तुष्टिकामः समैर्यवैः॥ २३॥
पायसं सर्व्वकामेषु होतव्यं शर्करान्वितम्।
मञ्चक्ताक्तैस्तर्पणानि तीव्रज्वरविनाशने॥ २४॥
सर्व्वरोगविनाशाय सूर्य्यस्याभिमुखो जपेत्।
सहस्रमयुतं लक्षं रोगाणां तारतम्यतः॥ २५॥

अपान्ते तु षड़ङ्गानां न्यासञ्चापि पराङ्कम् ।
पञ्चत्रिंशरुद्रेषु चतुर्वर्णैः षड़ङ्गकम् ॥ २६ ॥
पादयोर्जङ्घयोर्जान्वोरुर्वोश्च मेढ्रके क्रमात् ।
नाभौ जठरे हृदये कण्ठे चैव मुखे नसि ॥ २७ ॥
नेत्रयोश्च भ्रुवोर्मध्ये ललाटे मूर्द्ध्नि विन्यसेत् ।
पदानि षोड़श मनोरिति त्वरितरुद्रियम् ॥ २८ ॥

इति श्रीमेरुतन्त्रोक्तस्त्वरितरुद्रमन्त्रः ।

## अथ महिम्नस्तवपाठः ।

ॐ महिम्नः पारन्ते परमविदुषो यद्यसदृशी
स्तुतिर्ब्रह्मादीनामपि तदवसन्नास्त्वयि गिरः ।
अथावाच्यः सर्व्वः स्वमतिपरिणामावधि गृणन्
ममाप्येष स्तोत्रे हर निरपवादः परिकरः ॥ १ ॥
अतीतः पन्थानं तव च महिमा वाङ्मनसयो-
रतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपि ।
स कस्य स्तोतव्यः कतिविधगुणः कस्य विषयः
पदे त्वर्व्वाचीने पतति न मनः कस्य न वचः ॥ २ ॥
मधुस्फीता वाचः परमममृतं निर्म्मितवत-
स्तव ब्रह्मन् किं वागपि सुरगुरोर्विस्मयपदम् ।
मम त्वेतां वाणीं गुणकथनपुण्येन भवतः
पुनामीत्यर्थेऽस्मिन् पुरमथन बुद्धिर्व्यवसिता ॥ ३ ॥
तवैश्वर्य्यं यत्तज्जगदुदयरक्षाप्रलयकृत्
त्रयी वस्तु व्यस्तं तिसृषु गुणभिन्नासु तनुषु ।
अभव्यानामस्मिन्वरद रमणीयामरमणीं
विहन्तुं व्याक्रोशीं विदधत इहैके जड़धियः ॥ ४ ॥

किमीहः किंकायः स खलु किमुपायस्त्रिभुवनं
किमाधारो धाता सृजति किमुपादान इति च ।
अतर्क्यैश्वर्य्ये त्वय्यनवसरदुःस्थो हतधियः
कुतर्कोऽयं कांश्चिन्मुखरयति मोहाय जगतः ॥ ५ ॥
अजन्मानो लोकाः किमवयववन्तोऽपि जगता-
मधिष्ठातारं किं भवविधिरनादृत्य भवति ।
अनीशो वा कुर्य्याद्भुवनजनने कः परिकरं
यतो मन्दास्त्वां प्रत्यमरवर संशेरत इमे ॥ ६ ॥
त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च ।
रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥ ७ ॥
महोक्षः खट्वाङ्गं परशुरजिनं भस्म फणिनः
कपालञ्चेतीयत्तव वरद तन्त्रोपकरणम् ।
सुरास्तां तामृद्धिं दधति च भवद्भ्रूप्रणिहितां
न हि स्वात्मारामं विषयमृगतृष्णा भ्रमयति ॥ ८ ॥
ध्रुवं कश्चित्सर्व्वं सकलमपरस्त्वध्रुवमिदं
परो ध्रौव्याध्रौव्ये जगति गदति व्यस्तविषये ।
समस्तेऽप्येतस्मिन् पुरमथन तैर्विस्मित इव
स्तुवन् जिह्रेमि त्वां न खलु ननु धृष्टा मुखरता ॥ ९ ॥
तवैश्वर्य्यं यत्नाद्यदुपरि विरञ्चिर्हरिरधः
परिच्छेत्तुं यातावनलमनिलस्कन्दवपुषः ।
ततो भक्तिश्रद्धाभरगुरु गृणद्भ्यां गिरिश यत्
स्वयं तस्थे ताभ्यां तव किमनुवृत्तिर्न फलति ॥ १० ॥

अयत्नादासाद्य त्रिभुवनमवैरव्यतिकरं
दशास्यो यद्बाहूनभृत रणकण्डूपरवशान् ।
शिरःपद्मश्रेणीरचितचरणाम्भोरुहबलेः
स्थिरायास्त्वद्भक्तेस्त्रिपुरहर विस्फूर्जितमिदम् ॥ ११ ॥

अमुष्य त्वत्सेवासमधिगतसारं भुजवनं
बलात्कैलासेऽपि त्वदधिवसतौ विक्रमयतः ।
अलभ्या पातालेऽप्यलसचलिताङ्गुष्ठशिरसि
प्रतिष्ठा त्वय्यासीद्ध्रुवमुपचितो मुह्यति खलः ॥ १२ ॥

यदृद्धिं सूत्राम्णो वरद परमोच्चैरपि सती-
मधश्चक्रे बाणः परिजनविधेयत्रिभुवनः ।
न तच्चित्रं तस्मिन्वरिवसितरि त्वच्चरणयो-
र्न कस्याप्युन्नत्यै भवति शिरसस्त्वय्यवनतिः ॥ १३ ॥

अकाण्डब्रह्माण्डक्षयचकितदेवासुरकृपा-
विधेयस्यासीद्यस्त्रिनयन विषं संहृतवतः ।
स कल्माषः कण्ठे तव न कुरुते न श्रियमहो
विकारोऽपि श्लाघ्यो भुवनभयभङ्गव्यसनिनः ॥ १४ ॥

असिद्धार्था नैव क्वचिदपि सदेवासुरनरे
निवर्त्तन्ते नित्यं जगति जयिनो यस्य विशिखाः ।
स पश्यन्नीश त्वामितरसुरसाधारणमभूत्
स्मरः स्मर्त्तव्यात्मा न हि वशिषु पथ्यः परिभवः ॥ १५ ॥

मही पादाघाताद्व्रजति सहसा संशयपदं
पदं विष्णोर्भ्राम्यद्भुजपरिघरुग्णग्रहगणम् ।
मुहुर्द्यौर्दौस्थ्यं यात्यनिभृतजटाताड़िततटा
जगद्रक्षायै त्वं नटसि ननु वामैव विभुता ॥ १६ ॥

वियद्व्यापी तारागणगुणितफेनोद्गमरुचिः
प्रवाहो वारां यः पृषतलघुदृष्टः शिरसि ते ।
जगद्द्वीपाकारं जलधिवलयं तेन कृतमि-
त्यनेनैवोन्नेयं धृतमहिम दिव्यं तव वपुः ॥ १७ ॥
रथः क्षोणी यन्ता शतधृतिरगेन्द्रो धनुरथो
रथाङ्गे चन्द्रार्कौ रथचरणपाणिः शर इति ।
दिधक्षोस्ते कोऽयं त्रिपुरतृणमाडम्बरविधिः
विधेयैः क्रीडन्त्यो न खलु परतन्त्राः प्रभुधियः ॥ १८ ॥
हरिस्ते साहस्रं कमलबलिमाधाय पदयो-
र्यदेकोने तस्मिन्निजमुदहरन्नेत्रकमलम् ।
गतो भक्त्युद्रेकः परिणतिमसौ चक्रवपुषा
त्रयाणां रक्षायै त्रिपुरहर जागर्त्ति जगताम् ॥ १९ ॥
क्रतौ सुप्ते जाग्रत्त्वमसि फलयोगे क्रतुमतां
क्व कर्म्म प्रध्वस्तं फलति पुरुषाराधनमृते ।
अतस्त्वां सम्प्रेक्ष्य क्रतुषु फलदानप्रतिभुवं
श्रुतौ श्रद्धां बद्ध्वा दृढपरिकरः कर्म्मसु जनः ॥ २० ॥
क्रियादक्षो दक्षः क्रतुपतिरधीशस्तनुभृता-
मृषीणामार्त्विज्यं शरणद सदस्याः सुरगणाः ।
क्रतुभ्रंशस्त्वत्तः क्रतुषु फलदानव्यसनिनो
ध्रुवं कर्त्तुं श्रद्धाविधुरमभिचाराय हि मखाः ॥ २१ ॥
प्रजानाथं नाथ प्रसभमभिकं स्वां दुहितरं
गतं रोहिद्भूतां रिरमयिषुमृष्यस्य वपुषा ।
धनुष्पाणेर्यातं दिवमपि सपत्राकृतममुं
त्रसन्तं तेऽद्यापि त्यजति न मृगव्याधरभसः ॥ २२ ॥

स्वलावण्याशंसाधृतधनुषमह्नाय तृणवत्
पुरः प्लुष्टं दृष्ट्वा पुरमथन पुष्पायुधमपि।
यदि स्त्रैणं देवी यमनिरतदेहार्द्धघटना-
दवैति त्वामद्धा बत वरद मुग्धा युवतयः॥ २३॥
श्मशानेष्वाक्रीड़ाः स्मरहर पिशाचाः सहचरा-
श्चिताभस्मालेपः स्रगपि नृकरोटीपरिकरः।
अमङ्गल्यं शीलं तव भवतु नामैवमखिलं
तथापि स्मर्त्तॄणां वरद परमं मङ्गलमसि॥ २४॥
मनः प्रत्यक्चित्ते सविधमवधायात्तमरुतः
प्रहृष्यद्रोमाणः प्रमदसलिलोत्सङ्गितदृशः।
यदालोक्याह्लादं ह्रद इव निमज्ज्यामृतमये
दधत्यन्तस्तत्त्वं किमपि यमिनस्तत्किल भवान्॥ २५॥
त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वं हुतवह-
स्त्वमापस्त्वं व्योम त्वमु धरणिरात्मा त्वमिति च।
परिच्छिन्नामेवं त्वयि परिणता बिभ्रति गिरं
न विद्मस्तत्तत्त्वं वयमिह हि यत्त्वं न भवसि॥ २६॥
त्रयीं तिस्रो वृत्तीस्त्रिभुवनमथो त्रीनपि सुरा-
नकाराद्यैर्वर्णैस्त्रिभिरपि दधत्तीर्णविकृति।
तुरीयन्ते धाम ध्वनिभिरवरुन्धानमणुभिः
समस्तं व्यस्तं त्वां शरणद गृणात्योमिति पदम्॥ २७॥
भवः सर्व्वो रुद्रः पशुपतिरथोग्रः सह महां-
स्तथा भीमेशानाविति यदभिधानाष्टकमिदम्।
अमुष्मिन् प्रत्येकं प्रविचरति देवश्रुतिरपि
प्रियायास्मै धाम्ने प्रणिहितनमस्योऽस्मि भवते॥ २८॥

नमो नेदिष्ठाय प्रियदव दविष्ठाय च नमो
नमः क्षोदिष्ठाय स्मरहर महिष्ठाय च नमः।
नमो वर्षिष्ठाय त्रिनयन यविष्ठाय च नमो
नमः सर्व्वस्मै ते तदिदमिति सर्व्वाय च नमः॥ २९॥

बहुलरजसे विश्वोत्पत्तौ भवाय नमो नमो
जनसुखकृते सत्त्वोद्रिक्तौ मृड़ाय नमो नमः।
प्रबलतमसे तत्संहारे हराय नमो नमः
प्रमहसि पदे निस्त्रैगुण्ये शिवाय नमो नमः॥ ३०॥

कृशपरिणति चेतः क्लेशवश्यं क्व चेदं
क्व च तव गुणसीमोल्लङ्घिनी शश्वदृद्धिः।
इति चकितममन्दीकृत्य मां भक्तिराधा-
द्वरद चरणयोस्ते वाक्यपुष्पोपहारम्॥ ३१॥

असितगिरिसमं स्यात्कज्जलं सिन्धुपात्रे
सुरतरुवरशाखा लेखनी पत्रमुर्व्वी।
लिखति यदि गृहीत्वा सारदा सर्व्वकालं
तदपि तव गुणानामीश पारं न याति॥ ३२॥

अहरहरनवद्यं धूर्ज्जटेः स्तोत्रमेतत्
पठति परमभक्त्या शुद्धचित्तः पुमान् यः।
स भवति शिवलोके रुद्रतुल्यस्तथात्र
प्रचुरतरधनायुः पुत्त्रवान् कीर्त्तिमांश्च॥ ३३॥

महेशान्नापरो देवो महिम्नो नापरा स्तुतिः।
अघोरान्नापरो मन्त्रो नास्ति तत्त्वं गुरोः परम्॥ ३४॥

दीक्षा दानं तपस्तीर्थं ज्ञानं यागादिकाः क्रियाः।
महिम्नस्तवपाठस्य कलां नार्हन्ति षोड़शीम्॥ ३५॥

कुसुमदशननामा सर्व्वगन्धर्व्वराजः
शिशुशशधरमौलेर्देवदेवस्य दासः ।
स गुरुनिजमहिम्नो भ्रष्ट एवास्य रोषात्
स्तवनमिदमकार्षीद्दिव्यदिव्यं महिम्नः ॥ ३६ ॥
सुरवरमुनिपूज्यं स्वर्गमोक्षैकहेतुं
पठति यदि मनुष्यः प्राञ्जलिर्नान्यचेताः ।
व्रजति शिवसमीपं किन्नरैः स्तूयमानः
स्तवनमिदममोघं पुष्पदन्तप्रणीतम् ॥ ३७ ॥
श्रीपुष्पदन्तमुखपङ्कजनिर्गतेन
स्तोत्रेण किल्बिषहरेण हरप्रियेण ।
कण्ठस्थितेन पठितेन समाहितेन
सुप्रीणितो भवति भूतपतिर्महेशः ॥ ३८ ॥
इत्येषा वाङ्मयी पूजा श्रीमच्छङ्करपादयोः ।
अर्पिता तेन मे देवः प्रीयताञ्च सदाशिवः ॥ ३९ ॥
इति श्रीपुष्पदन्ताचार्य्यविरचितं शिवमहिमाख्यस्तोत्रं सम्पूर्णम् ।
शिवार्पणमस्तु ।

# अथ शिवकवचम् ।

अस्य श्रीशिवकवचस्तोत्रमन्त्रस्य ब्रह्मा ऋषिः अनुष्टुप् छन्दः श्रीसदाशिवरुद्रो देवता ह्रीं शक्तिः रं कीलकं श्रीं ह्रीं क्लीं बीजं श्रीसदाशिवप्रीत्यर्थे शिवकवचस्तोत्रजपे विनियोगः ।

अथ करन्यासः ।

ॐ नमो भगवते ज्वलज्ज्वालामालिने ॐ ह्रां सर्व्वशक्तिधाम्ने ईशानात्मने अङ्गुष्ठाभ्यां नमः । ॐ नमो भगवते ज्वलज्ज्वाला-मालिने ॐ नमो नं रिं नित्यतृप्तिधाम्ने तत्पुरुषात्मने तर्ज्जनीभ्यां

नमः। ॐ नमो भगवते ज्वलज्ज्वालामालिने ॐ मं रुं अनादि-शक्तिधाम्ने अघोरात्मने मध्यमाभ्यां नमः। ॐ नमो भगवते ज्वलज्ज्वालामालिने ॐ शिं रैं स्वतन्त्रशक्तिधाम्ने वामदेवात्मने अनामिकाभ्यां नमः। ॐ नमो भगवते ज्वलज्ज्वालामालिने ॐ वां रौं अतुल्यशक्तिधाम्ने सद्योजातात्मने कनिष्ठाभ्यां नमः। ॐ नमो भगवते ज्वलज्ज्वालामालिने ॐ यं रः अनादिशक्तिधाम्ने सर्व्वात्मने करतलकरपृष्ठाभ्यां नमः।

एवं हृदयादिन्यासः।

अथ ध्यानम्।

वज्रदंष्ट्रं त्रिनयनं कालकण्ठमरिन्दमम्।
सहस्रकरमत्युग्रं वन्दे शम्भुमुमापतिम्॥ १॥

अथापरं सर्व्वपुराणगुह्यं निःशेषपापौघहरं पवित्रम्।
जयप्रदं सर्व्वविपत्प्रमोचनं वक्ष्यामि शैवं कवचं हिताय ते॥ २॥

ऋषभ उवाच।

नमस्कृत्य महादेवं विश्वव्यापिनमीश्वरम्।
वक्ष्ये शिवमयं वर्म्म सर्व्वरक्षाकरं नृणाम्॥ ३॥

शुचौ देशे समासीनो यथावत्कल्पितासनः।
जितेन्द्रियो जितप्राणश्चिन्तयेच्छिवमव्ययम्॥ ४॥

हृत्पुण्डरीकान्तरसन्निविष्टं स्वतेजसा व्याप्तनभोऽवकाशम्।
अतीन्द्रियं सूक्ष्ममनन्तमाद्यं ध्यायेत्परानन्दमयं महेशम्॥ ५॥

ध्यानावधूताखिलकर्म्मबन्धश्चिरं चिदानन्दनिमग्नचेताः।
षड्क्षरन्याससमाहितात्मा शैवेन कुर्य्यात्कवचेन रक्षाम्॥ ६॥

मां पातु देवोऽखिलदेवतात्मा संसारकूपे पतितं गभीरे।
तन्नाम दिव्यं वरमन्त्रमूलं धुनोतु मे सर्व्वमघं हृदिस्थम्॥ ७॥

सर्व्वत्र मां रक्षतु विश्वमूर्त्तिर्ज्योतिर्म्मयानन्दघनश्चिदात्मा ।
अणोरणीयानुरुशक्तिरेकः स ईश्वरः पातु भयादशेषात् ॥ ८ ॥
यो भूस्वरूपेण बिभर्त्ति विश्वं पायात्स भूमेर्गिरिशोऽष्टमूर्त्तिः ।
योऽपां स्वरूपेण नृणां करोति सञ्जीवनं रक्षतु मां जलेभ्यः ॥ ९ ॥
कल्पावसाने भुवनानि दग्ध्वा सर्व्वाणि यो नृत्यति भूरिलीलः ।
स कालरुद्रोऽवतु मां दवाग्नेर्वात्यादिभीतेरखिलाच्च तापात् ॥१०॥
प्रदीप्तविद्युत्कनकावभासो विद्यावराभीतिकुठारपाणिः ।
चतुर्मुखस्तत्पुरुषस्त्रिनेत्रः प्राच्यां स्थितं रक्षतु मामजस्रम् ॥ ११ ॥
कुठारखेटाङ्कुशपाशशूलकपालढक्काक्षगुणान्दधानः ।
चतुर्मुखो नीलरुचिस्त्रिनेत्रः पायादघोरो दिशि दक्षिणस्याम् ॥१२॥
कुन्देन्दुशङ्खस्फटिकावभासो वेदाक्षमालावरदाभयाङ्कः ।
त्र्यक्षश्चतुर्वक्त्र उरुप्रभावः सद्योऽधिजातोऽवतु मां प्रतीच्याम् ॥१३॥
वराक्षमालाभयटङ्कहस्तः सरोजकिञ्जल्कसमानवर्णः ।
त्रिलोचनश्चारुचतुर्मुखो मां पायादुदीच्यां दिशि वामदेवः ॥१४॥
वेदाभयेष्टाङ्कुशपाशटङ्ककपालढक्काक्षकशूलपाणिः ।
सितद्युतिः पञ्चमुखोऽवतान्मामीशान ऊर्द्ध्वं परमप्रकाशः ॥ १५ ॥
मूर्द्धानमव्यान्मम चन्द्रमौलिर्भालं ममाव्यादथ भालनेत्रः ।
नेत्रे ममाव्याद्भगनेत्रहारी नासां सदा रक्षतु विश्वनाथः ॥ १६ ॥
पायाच्छ्रुती मे श्रुतिगीतकीर्त्तिः कपोलमव्यात्सततं कपाली ।
वक्त्रं सदा रक्षतु पञ्चवक्त्रो जिह्वां सदा रक्षतु वेदजिह्वः ॥ १७ ॥
कण्ठं गिरीशोऽवतु नीलकण्ठः पाणिद्वयं पातु पिनाकपाणिः ।
दोर्मूलमव्यान्मम धर्म्मबाहुर्वक्षःस्थलं दक्षमखान्तकोऽव्यात् ॥ १८ ॥
ममोदरं पातु गिरीन्द्रधन्वा मध्यं ममाव्यान्मदनान्तकारी ।
हेरम्बतातो मम पातु नाभिं पायात्कटिं धूर्ज्जटिरीश्वरो मे ॥१९॥

ऊरुद्वयं पातु कुवेरमित्रो जानुद्वयं मे जगदीश्वरोऽव्यात् ।
जङ्घायुगं पुङ्गवकेतुरव्यात्पादौ ममाव्यात्सुरवन्द्यपादः ॥ २० ॥
महेश्वरः पातु दिनादियामे मां मध्ययामेऽवतु वामदेवः ।
त्रियम्बकः पातु तृतीययामे वृषध्वजः पातु दिनान्त्ययामे ॥ २१ ॥
पायान्निशादौ शशिशेखरो मां गङ्गाधरो रक्षतु मां निशीथे ।
गौरीपतिः पातु निशावसाने मृत्युञ्जयो रक्षतु सर्व्वकालम् ॥२२॥
अन्तःस्थितं रक्षतु शङ्करो मां स्थाणुः सदा पातु वहिःस्थितं माम्।
तदन्तरे पातु पतिः पशूनां सदाशिवो रक्षतु मां समन्तात् ॥२३॥
तिष्ठन्तमव्याद्भुवनैकनाथः पायाद्व्रजन्तं प्रमथाधिनाथः ।
वेदान्तवेद्योऽवतु मां निषण्णं मामव्ययः पातु शिवः शयानम् ॥२४॥
मार्गेषु मां रक्षतु नीलकण्ठः शैलादिदुर्गेषु पुरत्रयारिः ।
अरण्यवासादिमहाप्रवासे पायान्मृगव्याध उदारशक्तिः ॥ २५ ॥
कल्पान्तकाटोपपटुप्रकोपस्फुटाट्टहासोच्चलिताण्डकोशः ।
घोरारिसेनार्णवदुर्निवारमहाभयाद्रक्षतु वीरभद्रः ॥ २६ ॥

पत्त्यश्वमातङ्गरथैर्वरूथिनी-
सहस्रलक्षायुतकोटिभीषणम् ।
अक्षौहिणीनां शतमाततायिनां
छिन्द्यान्मृड़ो घोरकुठारधारया ॥ २७ ॥

निहन्तु दस्यून् प्रलयानलार्चिर्ज्ज्वलत्त्रिशूलं त्रिपुरान्तकस्य ।
शार्दूलसिंहर्क्षवृकादिहिंस्रान्सन्त्रासयत्वीशधनुः पिनाकः ॥ २८ ॥

दुःस्वप्नदुःशकुनदुर्गतिदौर्मनस्य-
दुर्भिक्षदुर्व्यसनदुःसहदुर्यशांसि ।
उत्पाततापविषभीतिमसद्ग्रहार्त्ति-
व्याधींश्च नाशयतु मे जगतामधीशः ॥ २९ ॥

ॐ नमो भगवते सदाशिवाय सकलतत्त्वात्मकाय सर्व्वमन्त्र-स्वरूपाय सर्व्वयन्त्राधिष्ठिताय सर्व्वतन्त्रस्वरूपाय सर्व्वतत्त्वविदूराय ब्रह्मरुद्रावतारिणे नीलकण्ठाय पार्व्वतीमनोहरप्रियाय सोम-सूर्य्याग्निलोचनाय भस्मोद्धूलितविग्रहाय महामणिमुकुटधारणाय माणिक्यभूषणाय सृष्टिस्थितिप्रलयकालरौद्रावताराय दक्षाध्वर-ध्वंसकाय महाकालभेदनाय मूलाधारैकनिलयाय तत्त्वातीताय गङ्गाधराय सर्व्वदेवाधिदेवाय षडाश्रयाय वेदान्तसाराय त्रिवर्ग-साधनायानन्तकोटिब्रह्माण्डनायकायानन्तवासुकितक्षककर्कोटक-शङ्कुलिकपद्ममहापद्मेत्यष्टमहानागकुलभूषणाय प्रणवस्वरूपाय चिदाकाशायाकाशदिक्स्वरूपाय ग्रहनक्षत्रमालिने सकलाय कलङ्करहिताय सकललोकैककर्त्रे सकललोकैकसंहर्त्रे सकल-लोकैकगुरवे सकललोकैकसाक्षिणे सकलनिगमगुह्याय सकल-वेदान्तपारगाय सकललोकैकवरप्रदाय सकललोकैकशङ्कराय शशाङ्कशेखराय शाश्वतनिजावासाय निराभासाय निरामयाय निर्म्मलाय निर्लोभाय निर्म्मदाय निश्चिन्ताय निरहङ्काराय निरङ्कुशाय निष्कलङ्काय निर्गुणाय निष्कामायानुपप्लवाय निर-वद्याय निरन्तराय निष्कारणाय निरातङ्काय निष्प्रपञ्चाय निःसङ्गाय निर्द्वन्द्वाय निराधाराय नीरागाय निष्क्रोधाय निष्पा-पाय निर्भयाय निर्विकल्पाय निर्भेदाय निष्क्रियाय निस्तुलाय निःसंशयाय निरञ्जनाय निरुपमविभवाय नित्यशुद्धबुद्धपरिपूर्ण-सच्चिदानन्दाद्वयाय परमशान्तस्वरूपाय तेजोरूपाय तेजोमयाय ।

जय जय रुद्र महारौद्र भद्रावतार महाभैरव कालभैरव कल्पान्तभैरव कपालमालाधर खट्वाङ्गखड्गचर्म्मपाशाङ्कुशडमरु-शूलचापबाण-गदाशक्ति-भिन्दिपाल-तोमरमुशलमुद्गर-पाशपरिघ-

भुशुण्डीशतघ्नीचक्राद्यायुधभीषणकर सहस्रमुख दंष्ट्राकरालवदन विकटाट्टहास विस्फारितब्रह्माण्डमण्डल नागेन्द्रकुण्डल नागेन्द्रहार नागेन्द्रवलय नागेन्द्रचर्म्मधर मृत्युञ्जय त्र्यम्बक त्रिपुरान्तक विश्वरूप विरूपाक्ष विश्वेश्वर वृषभवाहन विश्वतोमुख—सर्व्वतो रक्ष रक्ष मां ज्वल ज्वल महामृत्युमपमृत्युभयं नाशय नाशय चोरभयमुत्सादयोत्सादय विषसर्पभयं शमय शमय चोरान्मारय मारय मम शत्रूनुच्चाटयोच्चाटय त्रिशूलेन विदारय विदारय कुठारेण भिन्धि भिन्धि खड्गेन छिन्धि छिन्धि खट्वाङ्गेन विपोथय विपोथय मुशलेन निष्पेषय निष्पेषय वाणैः सन्ताड़य सन्ताड़य रक्षांसि भीषय भीषय अशेषभूतानि विद्रावय विद्रावय कुष्माण्डवेतालमारीगणब्रह्मराक्षसगणान्सन्त्रासय सन्त्रासय ममाभयं कुरु कुरु वित्रस्तं मामाश्वासयाश्वासय नरकमहाभयान्मामुद्धरोद्धर सञ्जीवय सञ्जीवय क्षुत्तृड्भ्यां मामाप्याययाप्यायय दुःखातुरं मामानन्दयानन्दय शिवकवचेन मामाच्छादयाच्छादय मृत्युञ्जय त्र्यम्बक सदाशिव नमस्ते नमस्ते ।

ऋषभ उवाच ।

इत्येतत्कवचं शैवं वरदं व्याहृतं मया ।
सर्व्वबाधाप्रशमनं रहस्यं सर्व्वदेहिनाम् ॥ २० ॥
यः सदा धारयेन्मर्त्त्यः शैवं कवचमुत्तमम् ।
न तस्य जायते क्वापि भयं शम्भोरनुग्रहात् ॥ २१ ॥
क्षीणायुः प्राप्तमृत्युर्वा महारोगहतोऽपि वा ।
सद्यः सुखमवाप्नोति दीर्घमायुश्च विन्दति ॥ २२ ॥
सर्व्वदारिद्र्यशमनं सौमङ्गल्यविवर्द्धनम् ।
यो धत्ते कवचं शैवं स देवैरपि पूज्यते ॥ २३ ॥

महापातकसङ्घातैर्मुच्यते चोपपातकैः।
देहान्ते मुक्तिमाप्नोति शिववर्म्मानुभावतः॥ ३४॥
त्वमपि श्रद्धया वत्स शैवं कवचमुत्तमम्।
धारयस्व मया दत्तं सद्यः श्रेयो ह्यवाप्स्यसि॥ ३५॥

सूत उवाच।

इत्युक्त्वा ऋषभो योगी तस्मै पार्थिवसूनवे।
ददौ शङ्खं महारावं खड्गञ्चारिनिषूदनम्॥ ३६॥
पुनश्च भस्म सम्मन्त्र्य तदङ्गं परितोऽस्पृशत्।
गजानां षट्सहस्रस्य द्विगुणस्य बलं ददौ॥ ३७॥
भस्मप्रभावात्सम्प्राप्य बलैश्वर्य्यधृतिस्मृतिः।
स राजपुत्त्रः शुशुभे शरदर्क इव श्रिया॥ ३८॥
तमाह प्राञ्जलिर्भूयः स योगी नृपनन्दनम्।
एष खड्गो मया दत्तस्तपोमन्त्रानुभावितः॥ ३९॥
शितधारमिमं खड्गं यस्मै दर्शयसे स्फुटम्।
स सद्यो म्रियते शत्रुः साक्षान्मृत्युरपि स्वयम्॥ ४०॥
अस्य शङ्खस्य निर्ह्रादं ये शृण्वन्ति तवाहिताः।
ते मूर्च्छिताः पतिष्यन्ति न्यस्तशस्त्रा विचेतनाः॥ ४१॥
खड्गशङ्खाविमौ दिव्यौ परसैन्यविनाशिनौ।
आत्मसैन्यसपक्षाणां शौर्य्यतेजोविवर्द्धनौ॥ ४२॥
एतयोश्च प्रभावेण शैवेन कवचेन च।
द्विषट्सहस्रनागानां बलेन महतापि च॥ ४३॥
भस्मधारणसामर्थ्याच्छत्रुसैन्यं विजेष्यसि।
प्राप्य सिंहासनं पित्र्यं गोप्तासि पृथिवीमिमाम्॥ ४४॥

इति भद्रायुषं सम्यगनुशास्य समात्मकम् ।
ताभ्यां सम्पूजितः सोऽथ योगी स्वैरगतिर्ययौ ॥ ४५ ॥

इति शिवकवचं सम्पूर्णम् ।

शुभम्भूयात् ।

## अथ भैरवतन्त्रोक्तसदाशिवकवचम् ।

श्रीदेव्युवाच ।

भगवन्देवदेवेश सर्व्वाम्नायप्रपूजित ।
सर्व्वम्मे कथितं देवकवचं न प्रकाशितम् ॥ १ ॥
प्रसादाख्यस्य मन्त्रस्य कवचं मे प्रकाशय ।
सर्व्वरक्षाकरं देव यदि स्नेहोऽस्ति मां प्रति ॥ २ ॥

श्रीभगवानुवाच ।

प्रसादमन्त्रकवचस्य वामदेव ऋषिः पङ्क्तिश्छन्दः सदाशिवो देवता साधकाभीष्टसिद्धये विनियोगः ।

शिरो मे सर्व्वदा पातु प्रसादाख्यः सदाशिवः ।
षडक्षरस्वरूपो मे वदनन्तु महेश्वरः ॥ ३ ॥
पञ्चाक्षरात्मा भगवान् भुजौ मे परिरक्षतु ।
मृत्युञ्जयस्त्रिवीजात्मा आयू रक्षतु मे सदा ॥ ४ ॥
वटमूलं समासीनो दक्षिणामूर्त्तिरव्ययः ।
सदा मां सर्व्वदः पातु षट्त्रिंशार्णस्वरूपधृक् ॥ ५ ॥
द्वात्रिंशार्णात्मको रुद्रः कुक्षिं मे परिरक्षतु ।
त्रिवर्णात्मा नीलकण्ठः कण्ठं रक्षतु सर्व्वदा ॥ ६ ॥
चिन्तामणिर्वीजरूपस्त्वर्द्धनारीश्वरो हरः ।
सदा रक्षतु मे गुह्यं सर्व्वसम्पत्प्रदायकः ॥ ७ ॥

एकाक्षरस्वरूपात्मा कूटव्यापी महेश्वरः ।
मार्त्तण्डभैरवो नित्यं पादौ मे परिरक्षतु ॥ ८ ॥
तुम्बुराख्यो महावीजस्वरूपस्त्रिपुरान्तकः ।
सदा मां रणभूमौ च रक्षतु त्रिदशाधिपः ॥ ९ ॥
ऊर्द्धमूर्द्धानमीशानो मम रक्षतु सर्व्वदा ।
दक्षिणस्यां तत्पुरुषस्त्वव्यान्मे गिरिनायकः ॥ १० ॥
अघोराख्यो महादेवः पूर्व्वस्यां परिरक्षतु ।
उत्तरस्यां सदा पातु सद्योजातस्वरूपधृक् ॥ ११ ॥
इत्थं रक्षाकरं देवि कवचं देवदुर्लभम् ।
प्रातःकाले पठेद्यस्तु कवचं साधकोत्तमः ॥ १२ ॥
पूजाकाले पठेद्यस्तु सोऽभीष्टफलमाप्नुयात् ।
कीर्त्तिश्रीकान्तिमेधायुःसहितो भवति ध्रुवम् ॥ १३ ॥
कण्ठे यो धारयेदेतत्कवचं मत्स्वरूपकम् ।
युद्धे च जयमाप्नोति द्यूते वादे च साधकः ॥ १४ ॥
कवचं धारयेद्यस्तु साधको दक्षिणे भुजे ।
देवा मनुष्या गन्धर्व्वा वश्यास्तस्य न संशयः ॥ १५ ॥
कवचं शिरसा यस्तु धारयेद्यतमानसः ।
करस्था तस्य देवेशि अणिमाद्यष्टसिद्धयः ॥ १६ ॥
भूर्जपत्रे त्विमां विद्यां शुक्लपट्टेन वेष्टिताम् ।
रजतोदरसंविष्टां कृत्वा वा धारयेत्सुधीः ॥ १७ ॥
सम्प्राप्य महतीं लक्ष्मीमन्ते मद्रूपभाक् ।
यस्मै कस्मै न दातव्यं न प्रकाश्यं कदाचन ॥ १८ ॥
शिष्याय भक्तियुक्ताय साधकाय प्रकाशयेत् ।
अन्यथा सिद्धिहानिः स्यात्सत्यमेतन्मनोरमे ॥ १९ ॥

तव स्नेहान्महादेवि कथितं कवचं शुभम् ।
न देयं कस्यचिद्भद्रे यदीच्छेदात्मनो हितम् ॥ २० ॥
योऽर्च्चयेद्गन्धपुष्पाद्यैः कवचं मन्मुखोदितम् ।
तेनार्च्चिता महादेवि सर्व्वे देवा न संशयः ॥ २१ ॥

इति भैरवतन्त्रे सदाशिवकवचं समाप्तम् ।

## अथ सदाशिवस्तवः ।

धरण्यग्निमरुद्व्योमयखेशेन्द्वर्कमूर्त्तये ।
सर्व्वभूतान्तरस्थाय शङ्कराय नमो नमः ॥ १ ॥
श्रुत्यन्तभूतवासाय श्रुतये श्रुतिजन्मने ।
अतीन्द्रियाय महते शाश्वताय नमो नमः ॥ २ ॥
स्थूलसूक्ष्मविभागाभ्यामनिर्द्देश्याय शम्भवे ।
भवाय भवभूताय दुःखहन्त्रे नमोऽस्तु ते ॥ ३ ॥
तर्कमार्गाभिभूताय तपसां फलदायिने ।
चतुर्व्वर्गवदान्याय सर्व्वज्ञाय नमो नमः ॥ ४ ॥
आदिमध्यान्तशून्याय निरस्ताशेषभीतये ।
योगिध्येयाय महते निर्गुणाय नमो नमः ॥ ५ ॥
विश्वात्मने विचिन्त्याय विलसच्चन्द्रमौलिने ।
कन्दर्पदर्पनाशाय कालहन्त्रे नमो नमः ॥ ६ ॥
विषाशनाय विषध्टक्वृषस्कन्धमुपेयुषे ।
सरिद्वामसमाबद्धकन्दर्पाय नमो नमः ॥ ७ ॥
शुद्धाय शुद्धभावाय शुद्धानामन्तरात्मने ।
पुरान्तकाय पूर्णाय पुण्यनाम्ने नमो नमः ॥ ८ ॥
तुष्टाय निजभक्तानां भुक्तिमुक्तिप्रदायिने ।
विवासिने विवासाय विश्वशास्त्रे नमो नमः ॥ ९ ॥

त्रिमूर्त्तिमूलभूताय त्रिनेत्रायादिशम्भवे।
त्रिधाम्नां धामरूपाय जन्मघ्नाय नमो नमः॥ १०॥
देवासुरशिरोरत्नकिरणारुणिताङ्घ्रये।
कान्ताय निजकान्तायै दत्तार्द्धाय नमो नमः॥ ११॥
स्तोत्रेणानेन पूजायां प्रीणयेज्जगतः पतिम्।
भुक्तिमुक्तिप्रदं साक्षात्सर्व्वज्ञं परमेश्वरम्॥ १२॥

इति सदाशिवस्तवः सम्पूर्णः।

## अथ शिवताण्डवस्तवः।

जटाटवीगलज्जलप्रवाहपावितस्थले
गलेऽवलम्ब्य लम्बितां भुजङ्गतुङ्गमालिकाम्।
डमड्डमड्डमड्डमन्निनादवड्डमर्वयं
चकार ताण्डताण्डवं तनोतु नः शिवः शिवम्॥ १॥
जटाकटाहसम्भ्रमभ्रमन्निलिम्पनिर्झरी-
विलोलवीचिवल्लरीविराजमानमूर्द्धनि।
धगद्धगद्धगज्ज्वलल्ललाटपट्टपावके
किशोरचन्द्रशेखरे रतिः प्रतिक्षणं मम॥ २॥
धराधरेन्द्रनन्दिनीविलासबन्धुबन्धुर-
स्फुरद्दिगन्तसन्ततिप्रमोदमानमानसे।
कृपाकटाक्षधोरणीनिरुद्धदुर्धरापदि
क्वचिद्दिगम्बरे मनो विनोदमेतु वस्तुनि॥ ३॥
जटाभुजङ्गपिङ्गलस्फुरत्फणामणिप्रभा-
कदम्बकुङ्कुमद्रवप्रलिप्तदिग्वधूमुखे।
मदान्धसिन्धुरस्फुरत्त्वगुत्तरीयमेदुरे
मनो विनोदमद्भुतं बिभर्त्तु भूतभर्त्तरि॥ ४॥

ललाटचत्वरज्वलद्धनञ्जयस्फुलिङ्गया
निपीतपञ्चसायकं नमन्निलिम्पनायकम् ।
सुधामयूखरेखया विराजमानशेखरं
महः कपालि सम्पदे सरिज्जटालमस्तु नः ॥ ५ ॥
सहस्रलोचनप्रभृत्यशेषलेखशेखर-
प्रसूनधूलिधोरणीविधूसराङ्घ्रिपीठभूः ।
भुजङ्गराजमालया निबद्धजाटजूटकः
श्रिये चिराय जायतां चकोरबन्धुशेखरः ॥ ६ ॥
करालभालपट्टिकाधगद्धगद्धगज्ज्वल-
द्धनञ्जयाहुतीकृतप्रचण्डपञ्चसायके ।
धराधरेन्द्रनन्दिनीकुचाग्रचित्रपत्रक-
प्रकल्पनैकशिल्पिनि त्रिलोचने रतिर्मम ॥ ७ ॥
नवीनमेघमण्डलीनिरुद्धदुर्द्धरस्फुरत्-
कुहूनिशीथिनीतमःप्रबन्धबद्धकन्दरः ।
निलिम्पनिर्झरीधरस्तनोतु कृत्तिसुन्दरः
कलानिधानबन्धुरः श्रियञ्जगद्धुरन्धरः ॥ ८ ॥
प्रफुल्लनीलपङ्कजप्रपञ्चकालिमप्रभा-
वलम्बिकण्ठकन्दलीरुचिप्रबद्धकन्धरम् ।
स्मरच्छिदं पुरच्छिदं भवच्छिदं गजच्छिदं
मखच्छिदान्धकच्छिदं तमन्तकच्छिदं भजे ॥ ९ ॥
अखर्व्वसर्व्वमङ्गलाकलाकदम्बमञ्जरी-
रसप्रवाहमाधुरीविजृम्भणामधुव्रतम् ।
स्मरान्तकं पुरान्तकं भवान्तकं मखान्तकं
युगान्तकान्धकान्तकं तमन्तकान्तकं भजे ॥ १० ॥

जयत्वदभ्रविभ्रमभ्रमद्भुजङ्गमश्वस-
द्विनिर्गमत्क्रमस्फुरत्करालभालहव्यवाट् ।
धिमिं धिमिं धिमिं ध्वनन्मृदङ्गतुङ्गमङ्गल-
ध्वनिक्रमप्रवर्त्तितप्रचण्डताण्डवः शिवः ॥ ११ ॥
दृषद्विचित्रतल्पयोर्भुजङ्गमौक्तिकस्रजो-
र्गरिष्ठरत्नलोष्टयोः सुहृद्विपक्षपक्षयोः ।
तृणारविन्दचक्षुषोः प्रजामहीमहेन्द्रयोः
समप्रवर्त्तिकः कदा सदाशिवं भजाम्यहम् ॥ १२ ॥
कदा निलिम्पनिर्झरीनिकुञ्जकोटरे वसन्
विमुक्तदुर्मतिः सदा शिरःस्थमञ्जलिं वहन् ।
विलोललोललोचनाललामभाललग्नकं
शिवेति मन्त्रमुच्चरन्सदा सुखी भवाम्यहम् ॥ १३ ॥
निलिम्पनाथनागरीकदम्बमौलिमल्लिका-
निगुम्फनिर्भरक्षरन्मधूलिकामनोहरः ।
तनोतु नो मनोमुदं विनोदनीमहर्निशं
परश्रियः परम्पदं तदङ्गजत्विषाञ्चयः ॥ १४ ॥
प्रचण्डवाडवानलप्रभाशुभप्रचारिणी
महाष्टसिद्धिकामिनी जनावहूतजल्पना ।
विमुक्तवामलोचनाविवाहकालिकध्वनिः
शिवेति मन्त्रभूषणा जगज्जयाय जायताम् ॥ १५ ॥
इति श्रीदशकन्धरविरचितः शिवताण्डवस्तवः सम्पूर्णः ॥

---

अथ भुजङ्गप्रयातवृत्तेन

## विश्वनाथाष्टकस्तवो लिख्यते ।

मृडानीकलत्रं हरं शूलपाणिं
शरण्यं शिवं सर्पहारं गिरीशम् ।
अनङ्गान्तकं भक्तविज्ञानदं तं
भजेऽहं मनोऽभीष्टदं विश्वनाथम् ॥ १ ॥
अजं पञ्चवक्त्रं त्रिनेत्रं गुणज्ञं
दयाज्ञानसिन्धुं प्रभुं प्राणनाथम् ।
विभुं भावगम्यं भवं नीलकण्ठं
भजेऽहं मनोऽभीष्टदं विश्वनाथम् ॥ २ ॥
चिताभस्मभूषार्चिताभासुराङ्गं
श्मशानालयं त्र्यम्बकं मुण्डमालम् ।
कराभ्यां दधानं त्रिशूलं कपालं
भजेऽहं मनोऽभीष्टदं विश्वनाथम् ॥ ३ ॥
अघघ्नं महाभैरवं भीमदंष्ट्रं
निरीहं तुषाराचलाभाङ्गगौरम् ।
गजारिं गिरौ संस्थितं चन्द्रचूडं
भजेऽहं मनोऽभीष्टदं विश्वनाथम् ॥ ४ ॥
विधुं भालदेशे विभान्तं दधानं
भुजङ्गेशसेव्यं पुरारिं महेशम् ।
शिवासङ्गृहीतार्द्धदेहं प्रसन्नं
भजेऽहं मनोऽभीष्टदं विश्वनाथम् ॥ ५ ॥

भवानीपतिं श्रीजगन्नाथनाथं
गणेशं गृहीतं बलीवर्दयानम् ।
सदा विघ्नविच्छेदहेतुं कृपालुं
भजेऽहं मनोऽभीष्टदं विश्वनाथम् ॥ ६ ॥

अगम्यं नटं योगिभिर्दण्डपाणिं
प्रसन्नाननं व्योमकेशं भयघ्नम् ।
स्तुतं ब्रह्ममायादिभिः पादकञ्जं
भजेऽहं मनोऽभीष्टदं विश्वनाथम् ॥ ७ ॥

मृडं योगमुद्राकृतं ध्याननिष्ठं
धृतं नागयज्ञोपवीतं त्रिपुण्ड्रम् ।
ददानं पदाम्भोजनम्राय कामं
भजेऽहं मनोऽभीष्टदं विश्वनाथम् ॥ ८ ॥

मृडस्य स्तवं यः प्रभाते पठेन्ना
हृदिस्थः शिवस्तस्य नित्यं प्रसन्नः ।
चिरस्थं धनं मित्रवर्गं कलत्रं
सुपुत्रं मनोऽभीष्टमोक्षं ददाति ॥ ९ ॥

योगीशमिश्रमुखपङ्कजनिर्गतं यो
विश्वेश्वराष्टकमिदं पठति प्रभाते ।
आसाद्य शङ्करपदाम्बुजयुग्मभक्तिं
भुक्त्वा समृद्धिमिह याति शिवान्तिकेऽन्ते ॥ १० ॥

इति श्रीशाकद्वीपीयवंशावतंसयोगीशमिश्रविरचितः
श्रीविश्वनाथाष्टकस्तवः सम्पूर्णः ।

—

## प्रार्थना ।

ॐ नमोङ्कारस्वरूपाय वेदरूपाय ते नमः ।
अलिङ्गलिङ्गरूपाय विश्वरूपाय ते नमः ॥ १ ॥
नमो मोक्षप्रदे तुभ्यं नमो नादात्मने तथा ।
नमः शब्दस्वरूपाय रूपातीताय ते नमः ॥ २ ॥
त्वं माता सर्व्वलोकानां त्वमेव जगतः पिता ।
त्वं भ्राता त्वं सुहृन्मित्रं त्वं प्रियः प्रियरूपधृक् ॥ ३ ॥
त्वं गुरुस्त्वं गतिः साक्षात्त्वं पिता त्वं पितामहः ।
नमस्ते भगवन्रुद्र भास्करामिततेजसे ॥ ४ ॥
संसारसागरे मग्नं मामुद्धर शिवाव्यय ।
अनेन पूजनेन त्वं वाञ्छितार्थप्रदो भव ॥ ५ ॥
अङ्गहीनं क्रियाहीनं विधिहीनं महेश्वर ।
पूजितं यन्मया देव तत्क्षमस्वाम्बिकापते ॥ ६ ॥
अन्यथासक्तचित्तेन क्रियाहीनेन वा विभो ।
मनोवाक्कायदुष्टेन पूजितं परमेश्वर ।
तत्सर्व्वं क्षम्यतां देव दासे कृत्वा दयां मयि ॥ ७ ॥
ज्ञानप्रदाय कलिकल्मषनाशनाय
भक्तप्रियाय शशिशोभितशेखराय ।
गङ्गाधराय गिरिजापतये नमोऽस्तु
भक्तिर्दृढा भवतु मे त्वयि भो महेश ॥ ८ ॥
हे चन्द्रचूड़ जगदीश्वर मन्मथारे
गौरीपते शिव शरण्य पिनाकपाणे ।
ज्योतिःस्वरूप वृषभध्वज पञ्चवक्त्र
नस्त्वामृते जगति कः सुखदोऽस्ति स्वामिन् ॥ ९ ॥

प्रणतमनुजकष्टघ्नाय गङ्गाधराय
त्रिभुवनजनकाय त्र्यम्बकायाक्षराय ।
मनसिजदहनायाभीष्टदात्रे शिवाय
त्वयि भवतु दृढ़ा मे ते नमोऽस्त्वीश भक्तिः ॥ १० ॥

त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च सखा त्वमेव ।
त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्व्वं मम देवदेव ॥ ११ ॥

शिवे भक्तिः शिवे भक्तिः शिवे भक्तिर्भवे भवे ।
अन्यथा शरणं नास्ति त्वमेव शरणं मम ॥ १२ ॥

मन्त्रहीनं क्रियाहीनं भक्तिहीनं महेश्वर ।
यत्पूजितं मया देव परिपूर्णं तदस्तु मे ॥ १३ ॥

ततो वक्ष्यमाणमन्त्रेण त्रिवारमर्घः शिवाय दातव्यः ।

रूपं देहि जयं देहि भाग्यं भगवन्देहि मे ।
भुक्तिमुक्तिफलं देहि गृहाणार्घं त्वयाधुना ॥ १ ॥

पुष्पाञ्जलिः ।

अज्ञानाद्यदि वा ज्ञानाज्जपपूजादिकं मया ।
कृतं तदस्तु सफलं कृपया तव शङ्कर ॥ १ ॥

तावकस्त्वद्गतप्राणस्त्वच्चित्तोऽहं सदा मृड़ ।
कृपानिध इति ज्ञात्वा भूतनाथ प्रसीद मे ॥ २ ॥

पुष्पाञ्जलिं समर्प्यैव क्षमाप्य विधिपूर्व्वकम् ।
पूजाकाले पुनर्देव त्वयागन्तव्यमेव हि ॥ ३ ॥

इति पुष्पाञ्जलिः ।

ततः शङ्खध्वनिं कुर्य्यात् गल्लनादं मुहुर्मुहुः ।
विसर्ज्जयेच्छिवं पश्चात्पुनरागमनाय च ॥

देवमस्तकाद्बिल्वदलमानीय स्वशिखायां धारयेत् । ततः महादेवाय नमः इत्युच्चार्य्य दक्षिणहस्तकनिष्ठिकया विसर्ज्जनं— प्रयातु भगवान्महादेवः इति ।

गच्छ त्वं परमं रम्यं स्वस्थानं परमेश्वर ।
देहि मे वाञ्छितार्थञ्च पुनरागमनाय च ॥

ततश्चरणामृतं पिबेत् ।

अकालमृत्युहरणं ब्रह्महत्याविनाशनम् ।
व्याधिघ्नं पुण्यमाश्नेऽहं शिवनिर्णेजनोदकम् ॥

इति मन्त्रं पठित्वा शिवचरणामृतं पिबेदिति यावत् ।

इति पार्थिवशङ्करपूजा समाप्ता ।

---

## अथ नित्यहवनविधिः ।

कुशत्रयं गोमयं वस्त्रं वस्त्राभावे पुनः कुशत्रयम् स्वः उदकपात्रम् इत्यासादनम् । प्रथमकुशत्रयेण परिसमूहनम् । परिसमुह्य २ गोमयोदकेन उपलेपनम् । उपलिप्य २ द्वितीयकुशत्रयेण उल्लिख्य २ अनामिकाङ्गुष्ठेन मृत्तिकोद्धरणम् । उद्धृत्य २ जलेनाभ्युक्षणम् । अभ्युक्ष्य २ पञ्चभूसंस्कारेणाग्निस्थापनम् ।

एषो ह देवः प्रति सो न सर्व्वा पूर्व्वं हि जातः स उ गर्भे अन्तः ।
स एव जातः स जनिष्यमाणः प्रपञ्चनात्तिष्ठति सर्व्वतोमुखः ॥

दधीचिगोत्रं घृतकल्लोलप्रवरम् अग्निमुखमुपसमाधाय वरदनामाग्नये नमः वरदनामाग्निमावाहयामि वरदनामाग्नेऽत्रागच्छ इत्यनेन मन्त्रेणार्घ्यगन्धपुष्पधूपदीपनैवेद्यान्तं पूजयेत् ।

अथ कुशकण्डिका।

अथाग्नेरुत्तरतः पात्रासादनम्। आज्यस्थालीकुशाः ३ स्रुवः स्रुक् एका समित् आज्यञ्च एवमासाद्य आज्यस्थाल्यामाज्यनिर्वापः। आज्याधिश्रयणम्। प्रथमकुशैः स्रुव-स्रुक्-सम्मार्ज्जनम्। आज्योद्वासनम्। द्वितीयकुशत्रयेण आज्योत्पवनम्। आज्यावेक्षणम्। आज्येन स्रुवनियोजनम्। स्रुवेण स्रुचि चतुराज्यग्रहणम्। तदुपरि समिधं दत्त्वा पुण्याहवाचनम। ततः समिधादानम्।

समिधाग्निंदुवस्यत घृतैर्बोधयतातिथिम्।
अस्मिन् हव्या जुहोत नः॥ इति समिधादानम्।

ॐ प्रजापतये स्वाहा इदं प्रजापतये पूर्व्वाधारे। ॐ इन्द्राय स्वाहा इदमिन्द्राय दक्षिणाधारे। ॐ अग्नये स्वाहा इदमग्नये पश्चिमाधारे। ॐ सोमाय स्वाहा इदं सोमाय उत्तराधारे।

ॐ भूः स्वाहा इदमग्नये। ॐ भुवः स्वाहा इदं वायवे। ॐ स्वः स्वाहा इदं सूर्य्याय। ॐ भूर्भुवः स्वः स्वाहा इदमग्निवायुसूर्य्येभ्यः।

ॐ त्वन्नो अग्ने वरुणस्य विद्वाँ देवस्य हेडो अवयासिसीष्ठाः।
यजिष्ठो वह्नितमस्तो सूचानो विश्वाद्वेशाꣳसि प्रमुमुग्ध्यस्मत्स्वाहा॥
इदमग्निवायुभ्याम्।

ॐ स त्वन्नो अग्ने वमोभवीति नेदिष्ठो अस्या उषसो व्युष्टौ।
अवयक्ष्मणो वरुणं रराणो वहिर्मूलिकं सुभवो न एधि स्वाहा॥
इदमग्निवरुणाभ्याम्।

ॐ अयाश्चाग्ने सनभिसश्च त्विषा सत्त्वमया असि।
अयानो यज्ञीयं वहाश्चयानो धेहि भेषजꣳ स्वाहा॥
इदमग्नये।

ॐ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः।
तेभिर्नो अद्य सवितुस्तद्विष्णोर्विश्वे मुञ्चन्तु मरुतः स्वर्काय स्वाहा॥
इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यः।

उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यमᳫ श्रथाय।
अथावयमादित्यव्रते वयं तवानागसो अदितये स्याम स्वाहा॥
इदं वरुणाय।

ॐ प्रजापतये स्वाहा इदं प्रजापतये।

सूतके मृतके चैव होमं नैव विलोपयेत्।
वैतानिकस्य यद्धर्त्ता अन्यश्चोपासने स्मृतः॥ इत्यङ्गिराः।

ॐ सूर्य्याय नमः। ॐ अग्नये नमः। सायं प्रायश्चित्त-गायत्र्या यथाशक्ति होमं कुर्य्यात्। पुनः स्वस्वेष्टदेवतामन्त्रेण होमः। प्राशनमार्ज्जनशान्तिकरणम्। अच्छिद्रावधारणम्। दक्षिणादानम्। पुण्याहवाचनम्।

इति नित्यहोमविधिः समाप्तः।

---

## अथ वैश्वदेवयन्त्रकारिका।

रेखाश्चतस्रो भुवि चोर्द्ध्वगाश्च तिर्य्यक्तथा स्युर्वसुकोणकञ्च।
कोणार्द्धभागोर्द्ध्वगते द्विरेखे लिखेदिदं भूतबलेस्तु विम्बम्॥

अथ बलिक्रमः।

पर्ज्जन्यादित्रिभिर्मध्ये धात्रेयादिद्विदक्षिणे।
वायव्यादिचतुष्कोणे दिशि प्राच्यां दिशश्चतुः॥ १॥
ब्रह्मान्तयस्तथा मध्ये विश्वेभ्यस्त्रीणि चोत्तरे।
तदुत्तरे उश्रषादीनि वायव्ये सनकास्तथा।
अपसव्यन्तु दातव्यं पितृभ्यो नैर्ऋते बलिम्॥ २॥

# अथ वैश्वदेवविधिः।

पादौ प्रक्षाल्य द्विराचम्य प्राङ्मुख उपविश्य ततः कुशत्रयम् गोमयं वज्रं वज्राभावे पुनः कुशत्रयम् ३ स्रुवः उदकपात्रम् इत्यासादनम्। प्रथमकुशत्रयेण अङ्गुष्ठतर्ज्जनीभ्यां परिसमुह्य २ अङ्गुष्ठमध्यमाभ्यां गोमयेन उपलिप्य २ अङ्गुष्ठानामिकाभ्यां द्वितीयकुशत्रयेण उल्लिख्य २ अङ्गुष्ठकनिष्ठाभ्याम् उद्धृत्य २ सर्व्वाङ्गुलीभिः जलेन अभ्युक्ष्य २ पञ्चभूसंस्कारैरग्निस्थापनम्।

एषो ह देवः प्रति शो न सर्व्वाः पूर्व्वो हि जातः स उ गर्भे अन्तः।
स एव जातः स जनिष्यमाणः प्रपञ्चनात्तिष्ठति सर्व्वतोमुखः॥

दधीचि-गोत्र—घृतकल्लोल-प्रवर—पावक-नामाग्नये नमः। पावक-नामाग्निमावाहयामि। पावक-नामाग्ने अत्रागच्छ।

ॐ ब्रह्मणे स्वाहा इदं ब्रह्मणे। ॐ प्रजापतये स्वाहा इदं प्रजापतये। ॐ गृह्येभ्यः स्वाहा इदं गृह्येभ्यः। ॐ कश्यपाय स्वाहा इदं कश्यपाय। ॐ अनुमतये स्वाहा इदमनुमतये। देवतीर्थेन पञ्चाहुतिं दद्यात्। इति देवयज्ञः।

मण्डलमध्ये। ॐ पर्ज्जन्याय नमः इदं पर्ज्जन्याय। ॐ अद्भ्यो नमः इदमद्भ्यः। ॐ पृथिव्यै नमः इदं पृथिव्यै। तद्दक्षिणे— ॐ धात्रे नमः इदं धात्रे। ॐ विधात्रे नमः इदं विधात्रे।

वायव्यादिचतुष्कोणे। ॐ वायवे नमः इदं वायवे। ॐ ईशानाय नमः इदमीशानाय। ॐ अग्नये नमः इदमग्नये। ॐ नैर्ऋताय नमः इदं नैर्ऋताय।

प्रागादिचतुर्दिक्षु। ॐ प्राच्यै दिशे नमः इदं प्राच्यै दिशे। ॐ दक्षिणायै दिशे नमः इदं दक्षिणायै दिशे। ॐ प्रतीच्यै दिशे नमः इदं प्रतीच्यै दिशे। ॐ उदीच्यै दिशे नमः इदमुदीच्यै दिशे।

मध्ये। ॐ ब्रह्मणे नमः इदं ब्रह्मणे। ॐ अन्तरीक्षाय नमः

इदमन्तरीक्षाय । ॐ सूर्य्याय नमः इदं सूर्य्याय । तदुत्तरे—ॐ विश्वेभ्यो नमः इदं विश्वेभ्यः । ॐ विश्वेभ्यो देवेभ्यो नमः इदं विश्वेभ्यो देवेभ्यः । ॐ विश्वेभ्यो भूतेभ्यो नमः इदं विश्वेभ्यो भूतेभ्यः । तदुत्तरे—ॐ उषसे नमः इदमुषसे । ॐ भूतानाञ्च पतये नमः इदं भूतानाञ्च पतये ।

यज्ञोपवीतं कण्ठावलम्बितं कृत्वा वायुकोणे । ॐ सनकाद्यास्सप्त ऋषयः इदमन्नादिकं यथाविभागं युष्मभ्यं हन्त । इति प्रजापतितीर्थेन उत्सृजेत् । इति ऋषियज्ञः ।

नैर्ऋतकोणे अपसव्येन पितृतीर्थेन दक्षिणाभिमुखो भूत्वा दद्यात् । अस्मत्पितृभ्यः स्वधा नमः इदमस्मत्पितृभ्यः । बलिशेषान्नं हस्ते गृहीत्वा तत्पत्रपृष्ठे—यक्ष्मैतत्ते निर्णेजनं नमः इदं यक्ष्मणे । इति भूतयज्ञः ।

दक्षिणाभिमुखः अमुकसगोत्राः अस्मत्पितृपितामहप्रपितामहा अमुकदेव२शर्म्माणः इदमन्नादिकं यथाविभागं युष्मभ्यं स्वधा नमः । इति पितृतीर्थेन उत्सृजेत् । इदमस्मत्पितृपितामहप्रपितामहेभ्यः अमुकदेव२शर्म्मभ्यः । मातामहादिपात्रे—अमुकसगोत्राः अस्मन्मातामहप्रमातामहवृद्धप्रमातामहाः अमुकदेव२शर्म्माणः इदमन्नादिकं यथाविभागं युष्मभ्यं स्वधा नमः । अमुकसगोत्राः अस्मत्पितृपितामहप्रपितामहाः अमुकदेव२शर्म्माणः अमुकसगोत्राः अस्मन्मातामहप्रमातामहवृद्धप्रमातामहाः अमुकदेव२शर्म्माणः इदं षट्पुरुषात्मकं घृताद्युपकरणसहितं यथाविभागं युष्मभ्यं स्वधा नमः इदमस्मत्पितृपितामहप्रपितामहेभ्यः मातामहप्रमातामहवृद्धप्रमातामहेभ्यः । इति उत्सृजेत् । इति पितृयज्ञः ।

ततो यज्ञोपवीतं सव्यं कृत्वा पूर्व्वाभिमुखः। ॐ अतिथि-ब्राह्मणेभ्यो नमः। इति देवतीर्थेन उत्सृजेत्। गृहे अतिथिं भोजयेत्। इति नृयज्ञः।

ततो गृहवाह्ये चाण्डालोचितभूप्रदेशे पूर्व्ववत् बलिं दद्यात्। सव्यं कृत्वा प्राङ्मुखोदङ्मुखः श्वभ्यो नमः श्वपचेभ्यो नमः वायसेभ्यो नमः इदं श्वभ्यः श्वपचेभ्यो वायसेभ्यः। इति वायसबलिं दत्त्वा प्रक्षालितमुखपाणिपादो द्विराचमेत्। ततो गोदोहनमात्रमतिथ्यर्थं प्रतीक्षेत।

ॐ अग्निर्देवता वातो देवता वरुणो देवता सूर्य्यो देवता चन्द्रमा देवता वसवो देवता रुद्रा देवता आदित्या देवता विश्वेदेवा देवता वृहस्पतिर्देवता इन्द्रो देवता वरुणो देवता।

इति नमस्कारः।

ऋषियज्ञं देवयज्ञं भूतयज्ञञ्च सर्व्वदा।
नृयज्ञं पितृयज्ञञ्च यथाशक्ति न हापयेत्॥

इति वैश्वदेवविधिः समाप्तः।

---

## गोग्रासदानम्।

सौरभेय्यः सर्व्वहिताः पवित्राः पुण्यरश्मयः।
प्रतिगृह्णन्तु मे ग्रासं गावस्त्रैलोक्यमातरः।
दद्यादनेन मन्त्रेण गवां ग्रासं सदैव हि॥ १॥

इति ब्रह्मपुराणे।

घासमुष्टिं परगवे स्नानङ्कृत्वा ददाति यः।
अकृत्वा स्वयमाहारं स्वर्गलोकं स गच्छति॥ २॥

इति महाभारते।

अथ प्रार्थना ।

पञ्चभूते शिवे पुण्ये पवित्रे सूर्य्यसम्भवे ।
प्रतिच्छेमं मया दत्तं सौरभेयि नमोऽस्तु ते ॥

इति भविष्यपुराणे ।

---

## अतिथिलक्षणम् ।

यस्य न ज्ञायते नाम न गोत्रं न च संस्थितिः ।
अकस्माद्गृहमायाति सोऽतिथिः प्रोच्यते बुधैः ॥ १ ॥
दूरायान्तं पथिश्रान्तं वैश्वदेव उपस्थितम् ।
अतिथिं तं विजानीयान्नातिथिः पूर्व्वमागतः ॥ २ ॥

अतिथिनैराश्यफलम् ।

अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्त्तते ।
स तस्मै दुष्कृतं दत्त्वा पुण्यमादाय गच्छति ॥

इति पराशरः ।

अतिथिसम्मानः ।

आसनाशनशय्याभिरद्भिर्मूलफलेन वा ।
नास्य कश्चिद्वसेद्गेहे शक्तितोऽनर्च्चितोऽतिथिः ॥

इति मनुः चतुर्थाध्याये २९ श्लोके ।

---

## पञ्चयज्ञवर्णनम् ।

अध्ययनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥

इति मनुः ।

---

## अथ चुलुकविधिः।

ॐ ब्रह्मणे नमः। इति पठित्वा जलं भूमौ क्षिपेत्। ॐ धर्म्मराजाय नमः। ॐ चित्रगुप्ताय नमः। इति पठित्वा बलिद्वयं दद्यात्। ॐ धर्म्मराजाय स्वाहा। ॐ चित्रगुप्ताय स्वाहा। इति पठित्वा बलिद्वये जलं क्षिपेत्। ततः अमृतोपस्तरणमसि स्वाहा। इति आचमेत्। ततः ॐ प्राणाय स्वाहा। ॐ अपानाय स्वाहा। ॐ व्यानाय स्वाहा। ॐ उदानाय स्वाहा। ॐ समानाय स्वाहा। इति पठित्वा पञ्चग्रासं कुर्य्यात्। शेषे अमृतापिधानमसि स्वाहा। इति चुलुकविधिः समाप्तः।

### भोजनसमये दिग्निरूपणम्।

आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः।
श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते उदङ्मुखः॥

### गृहस्थभोजननियमः।

बालस्ववासिनीवृद्धगर्भिण्यातुरकन्यकाः।
सम्भोज्यातिथिभृत्यांश्च दम्पत्योः शेषभोजनम्॥

इति याज्ञवल्क्यः।

### भोजनक्रमः।

अश्नीयात्तन्मना भूत्वा पूर्व्वन्तु मधुरं रसम्।
लवणाम्लौ तथा मध्ये कटुतिक्तादिकांस्ततः॥ १॥
प्राग्द्रवं पुरुषोऽश्नीयात्तन्मध्ये कठिनाशनः।
पुनरन्ते द्रवाशी च बलारोग्ये न मुञ्चति॥ २॥

इति विष्णुपुराणे।

### अथ षड्रसभोजनगुणः।

कटुकाद्वर्द्धते मांसं कषायाच्छोणितं रसम्।
लवणाद्वर्द्धते त्वस्थि अम्लान्मज्जा प्रवर्द्धते॥ १॥

मधुराद्वर्द्धते शुक्रं तिक्ताम्मेदः प्रवर्द्धते ।
इति पथ्यं विजानीयादनुष्ठेयञ्च तत्तथा ॥ २ ॥

इति सुमन्तुवचनम् ।

आहारविधिः ।

कुर्य्यात्क्षीरान्तमाहारं न च पश्चात्त्रिवेद्दधि ।
जठरं पूरयेदर्द्धमन्नैर्भागं जलेन च ।
वायोः सञ्चारणार्थाय चतुर्थमवशेषयेत् ॥

इति ब्रह्मपुराणे ।

भुक्त्वा शतपदं गच्छेच्छनैस्तेन तु जायते ।
अङ्गसङ्घातशैथिल्यं ग्रीवाजानुकटीसुखम् ॥ १ ॥
भुक्त्वोपविशतस्तन्द्रा शयानस्य तु पुष्टता ।
आयुश्चङ्क्रममाणस्य मृत्युर्धावति धावतः ॥ २ ॥
चङ्क्रममाणस्य पदशतं शनैर्गच्छतः ।

इति भावप्रकाशे ५ पङ्क्तेस्फूटम् ।

अथ ताम्बूलगुणः ।

रतौ सुप्तोत्थिते स्नाते भुक्ते वान्ते च सङ्गरे ।
सभायां विदुषां राज्ञां कुर्य्यात्ताम्बूलभक्षणम् ॥
ताम्बूलं कटु तिक्तमुष्णमधुरं क्षारं कषायान्वितं
वातघ्नं कृमिनाशनं कफहरं दुर्गन्धनिर्नाशनम् ।
वक्त्रस्याभरणं विशुद्धिकरणं कामाग्निसन्दीपनं
ताम्बूलस्य सखे त्रयोदश गुणाः स्वर्गेऽपि ते दुर्लभाः ॥ १ ॥
ताम्बूलमुक्तं तीक्ष्णोष्णरोचनं तूवरं सरम् ।
तिक्तं क्षारोषणं कामरक्तपित्तकरं लघु ॥ २ ॥

वश्यं श्लेष्मास्यदौर्गन्ध्यमलवातश्रमापहम् ।
मुखवैशद्यसौगन्ध्यकान्तिसौष्ठवकारकम् ॥ ३ ॥
हनुदन्तमलध्वंसि जिह्वेन्द्रियविशोधनम् ।
मुखप्रसेकशमनं गलामयविनाशनम् ॥ ४ ॥
नवं तदेव मधुरं कषायानुरसं गुरु ।
बलासजननं प्रायः पत्त्रशाकगुणं स्मृतम् ॥ ५ ॥
वङ्गदेशोद्भवं पर्णं परं कटुरसं सरम् ।
पाचनं पित्तजनकमुष्णं कफहरं स्मृतम् ॥ ६ ॥
पर्णं पुराणमकटु खुल्लकं तनु पाण्डुरम् ।
विशेषाद्गुणवद्द्येयमन्यद्धीनगुणं स्मृतम् ॥ ७ ॥

इति ताम्बूलगुणः ।

पूगफलखदिरचूर्णगुणाः ।

पूगं स्याद्दृढमध्यं यत् स्विन्नं वापि त्रिदोषनुत् ।
सरसं गुर्व्वभिष्यन्दि तद्वृशं वह्निनाशनम् ॥ १ ॥
खदिरः कफपित्तघ्नश्चूर्णो वातबलासनुत् ।
संयोगतस्त्रिदोषघ्नं सौमनस्यं करोति च ॥ २ ॥

तत्सेवनप्रकारः ।

प्रभाते पूगमधिकं मध्याह्ने खदिरं तथा ।
निशासु चूर्णमधिकं ताम्बूलं भक्षयेत्सदा ॥ ३ ॥

ताम्बूलभक्षणायोग्यतामाह ।

ताम्बूलं नातिसेवेत न विरक्तो बुभुक्षितः ।
देहदृक्केशदन्ताग्निश्रोत्रवर्णबलक्षयः ॥ १ ॥
ताम्बूलं न हितं दन्तदुर्बलेक्षणरोगिणाम् ।
विषमूर्च्छामदार्त्तानां क्षयिणां रक्तपित्तिनाम् ॥ २ ॥

## शयनक्रमः ।

श्वासानष्टौ समुत्तानस्तान् द्विः पार्श्वे तु दक्षिणे ।
ततस्तद्द्विगुणान्वामे पश्चात्स्वप्याद्यथासुखम् ॥ १ ॥
वामदिशायामनलो नाभेरूर्द्ध्वोऽस्ति जन्तूनाम् ।
तस्मात्तु वामपार्श्वे शयीत भुक्तप्रपाकार्थम् ॥ २ ॥

इति शयनक्रमः ।

### अथ शय्यागुणः ।

त्रिदोषशमनी खट्टा तूली वातकफापहा ।
भूशय्या बृंहणी वृष्या काष्ठपट्टी तु वातला ॥ १
सुशय्याशयनं हृद्यं पुष्टिनिद्राधृतिप्रदम् ।
श्रमानिलहरं वृष्यं विपरीतमतोऽन्यथा ॥ २ ॥

### अथाङ्गमर्द्दनगुणः ।

संवाहनं मांसरक्तत्वक्प्रसादकरं परम् ।
प्रीतिनिद्राकरं वृष्यं कफवातश्रमापहम् ॥

### अथ व्यजनगुणः ।

व्यजनस्यानिलो दाहस्वेदमूर्च्छाश्रमापहः ।
तालवृन्तभवो वातस्त्रिदोषशमको मतः ॥ १ ॥
वंशव्यजनजस्तूष्णो रक्तपित्तप्रकोपणः ।
चामरो वस्त्रसम्भूतो मायूरो वैत्रजस्तथा ।
एते दोषजिता वाताः स्निग्धा हृद्याः सुपूजिताः ॥ २ ॥

### दिवसशयननियमः ।

दिवास्वापं न कुर्व्वीत यतोऽसौ स्यात्कफावहः ।
ग्रीष्मवर्ज्जेषु कालेषु दिवास्वप्नो निषिद्ध्यते ॥ १ ॥

उचितो हि दिवास्वप्नो नित्यं येषां शरीरिणाम् ।
वातादयः प्रकुप्यन्ति तेषामस्वपतां दिवा ॥ २ ॥
दिवा वा यदि वा रात्रौ निद्रा सात्मीकृता तु यैः ।
न तेषां स्वपतां दोषो जाग्रताञ्चोपजायते ॥ ३ ॥

व्यायामप्रमदाध्ववाहनरतान् क्लान्तानतीसारिणः
शूलश्वासवतस्तृषापरिगतान् हिक्कामरुत्पीड़ितान् ।
क्षीणान् क्षीणकफान् शिशून्मदहतान् वृद्धान्रसाजीर्णिनो
रात्रौ जागरितान्नराग्निरशनान् कामं दिवा स्वापयेत् ॥४॥

शयनं पित्तनाशाय ज्वरनाशाय लङ्घनम् ।
वमनं कफनाशाय वातनाशाय मर्द्दनम् ॥ ५ ॥

दिवसमैथुने दोषः ।

आयुःक्षयभयाद्दिवान्नाकाङ्क्षि सेवेत कामिनीम् ।
अवशो यदि सेवेत तदा ग्रीष्मवसन्तयोः ॥

## अथ उष्णीषधारणगुणः ।

उष्णीषं कान्तिकृत्केश्यं रजोवातकफापहम् ।
लघु तच्छस्यते यस्माद्गुरु पित्ताच्छिरोगकृत् ॥

उपानद्धारणगुणः ।

उपानद्धारणं नित्यमायुष्यं पादरोगहृत् ।
सुखप्रचारमोजस्यं वृष्यञ्च परिकीर्त्तितम् ॥

छत्रधारणगुणः ।

छत्रस्य धारणं वर्षातपवातरजोऽपहम् ।
हिमघ्नं हितमच्छोस्य माङ्गल्यमपि कीर्त्तितम् ॥

दण्डधारणगुणः ।

सत्त्वोत्साहबलस्थैर्य्यधैर्य्यतेजोविवर्द्धनम् ।
अवष्टम्भकरञ्चापि भयघ्नं दण्डधारणम् ॥

## मार्गगमनगुणः ।

अध्वा वर्णकफस्थौल्यसौकुमार्य्यसुखप्रदः ।
पादाभ्यामनुपानद्भ्यां सदा चङ्क्रमणं नृणाम् ।
अनारोग्यमनायुष्यमिन्द्रियघ्नमदृष्टिदम् ॥ १ ॥
यत्तु चङ्क्रमणं नातिदेहपीड़ाकरं भवेत् ।
तदायुर्बलमेधाग्निबलमिन्द्रियबोधनम् ॥ २ ॥

## अथ शिविकारोहणगुणः ।

मूर्द्धाच्छादनसंयुक्ता शिविका सर्व्ववल्लभा ।
तस्यामारोहणं नृणां त्रिदोषशमकं मतम् ॥

नौकारोहणगुणदोषौ ।

वातश्लेष्मगदार्त्तानामहिता भ्रमकृत्तरिः ।

हस्त्यारोहणगुणदोषौ ।

पित्तानिलकरो हस्ती लक्ष्म्यायुःपुष्टिवर्द्धनः ।

घोटकारोहणगुणदोषौ ।

घोटकारोहणं वातपित्ताग्निश्रमकृन्मतम् ।
मेदोवर्णकफघ्नञ्च हितं तद्बलिनां परम् ॥

## छायासेवनगुणः ।

आतपः स्वेदमूर्च्छास्रपित्ततृष्णाक्लमश्रमान् ।
दाहं विवर्णतां कुर्य्यादेतांश्छाया व्यपोहति ॥

### वृष्टिसेवनगुणदोषौ।

वृष्टिर्दृष्या हिमा बल्या निद्रालस्यविधायिनी।

### कुहेलीसेवनदोषः।

भयावहा मोहकरी कुहेली कफवातला।

## धूम्रपानगुणदोषौ।

अग्निवातकफस्तम्भशीतवेपथुनाशनः।
आमाभिष्यन्दशमनो रक्तपित्तप्रकोपकः॥ १॥
सद्यः श्लेष्मकरो धूमो नेत्रयोरहितो भृशम्।
शिरोगौरवकञ्चापि वातपित्तञ्च कोपयेत्॥ २॥

## अथ रात्रिचर्य्यामाह।

रात्रौ च भोजनं कुर्य्यात्प्रथमप्रहरान्तरे।
किञ्चिदूनं समश्नीयाद्दुर्ज्जरं तत्र वर्ज्जयेत्॥ १॥
ज्योत्स्ना शीता स्मरानन्दप्रदा तृट्पित्तदाहहृत्।
ततो हीनगुणः कुर्य्यादवश्यायोऽनिलं कफम्॥ २॥
तमो भयावहं मोहदिङ्मोहजनकं भवेत्।
पित्तहृत्कफहृत्कामवर्द्धनं श्रमकञ्च तत्॥ ३॥
शरीरे जायते नित्यं देहिनः सुरतस्पृहा।
अव्यवायान्मेहमेदोवृद्धिः शिथिलता तनोः॥ ४॥
बालेति गीयते नारी यावद्वर्षाणि षोड़श।
ततस्तु तरुणी ज्ञेया द्वात्रिंशद्वत्सरावधि॥ ५॥
तदूर्द्ध्वमधिरूढ़ा स्यात्पञ्चाशद्वत्सरावधि।
वृद्धा तत्परतो ज्ञेया सुरतोत्सववर्ज्जिता॥ ६॥

निदाघशरदोर्बाला हिता विषयिणी मता।
तरुणी शीतसमये प्रौढ़ा वर्षावसन्तयोः ॥ ७ ॥
नित्यं बाला सेव्यमाना नित्यं वर्द्धयते बलम्।
तरुणी ह्रासयेच्छक्तिं प्रौढ़ोद्भावयते जराम् ॥ ८ ॥
सद्योमांसं नवञ्चान्नं बाला स्त्री क्षीरभोजनम्।
घृतमुष्णोदके स्नानं सद्यः प्राणकराणि षट् ॥ ९ ॥
पूतिमांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि।
प्रभाते मैथुनं निद्रा सद्यः प्राणहराणि षट् ॥ १० ॥

बलवाचकोऽत्र प्राणशब्दः। बालार्कस्तु कन्यार्कः।

वृद्धोऽपि तरुणीं गत्वा तरुणत्वमवाप्नुयात्।
वयोऽधिकां स्त्रियं गत्वा तरुणः स्थविरायते ॥ ११ ॥
आयुष्मन्तो मन्दजरा वपुर्वर्णबलान्विताः।
स्थिरोपचितमांसाश्च भवन्ति स्त्रीषु संयताः ॥ १२ ॥
सेवेत कामतः कामं बलाद्वाजीकृतो हिमे।
प्रकामन्तु निषेवेत मैथुनं शिशिरागमे।
त्र्यहाद्वसन्तशरदोः पक्षाद्वृष्टिनिदाघयोः ॥ १३ ॥

इति भावप्रकाशे।

त्रिभिस्त्रिभिरहोभिर्हि समेयात्प्रमदां नरः।
सर्व्वेष्वृतुषु घर्म्मेषु पक्षात्पक्षाद्व्रजेद्बुधः ॥

इति सुश्रुते।

अत्यन्तमूलकटुतिक्तकषायमम्लं
क्षारञ्च शाकखदिरं लवणादिकञ्च।
कामी सदैव रतिमान्वनिताभिलाषी
नो भक्षयेदिति समस्तजनप्रसिद्धः ॥ १ ॥

यत्किञ्चिन्मधुरं स्निग्धं जीवनं वृंहणं गुरु ।
हर्षणं मनसश्चैव तत्सर्व्वं वृष्यमुच्यते ॥ २ ॥
नरो वीर्य्यकरान्योगान्सम्यक्शुद्धो निरामयः ।
आसप्ततेः प्रकुर्व्वीत वर्षादूर्द्धञ्च षोड़शात् ॥ ३ ॥
न पूर्व्वं षोड़शाद्वर्षात्सप्तत्याः परतो न च ।
आयुष्कामो नरः स्त्रीभिः संयोगं कर्त्तुमर्हति ॥ ४ ॥
ग्लानिकम्पोरुदौर्बल्यं धात्विन्द्रियबलक्षयः ।
क्षयवृद्ध्युपदंशाद्या रोगाश्चातीव दुर्ज्जयाः ॥ ५ ॥
अकालमरणञ्चैव भजतः स्त्रियमन्यथा ।
शोषकासज्वरार्शांसि श्वासकार्श्यातिपाण्डुताः ॥ ६ ॥
अतिव्यवायाज्जायन्ते रोगाश्च क्षयकादयः ।
असेवनान्मेहमेदोग्रन्थिरक्तेश्च मार्दवम् ॥ ७ ॥

## अथ स्त्रीसेवननियमः ।

शीते रात्रौ दिवा ग्रीष्मे वसन्ते तु दिवा निशि ।
वर्षासु वारिदध्वाने शरत्सु सरसः स्मरः ॥ १ ॥
उपेयात्पुरुषो नारीं सन्ध्ययोर्न च पर्व्वसु ।
गोसर्गे चार्द्धरात्रे च तथा मध्यदिनेऽपि च ॥ २ ॥
विहारं भार्य्यया कुर्य्याद्देशेऽतिशयसंवृते ।
रम्ये अव्याङ्गनागाने सुगन्धे सुखमारुते ॥ ३ ॥
देशे गुरुजनासन्ने विवृतेऽतित्रपाकरे ।
श्रूयमाणे व्यथाहेतुवचने न रमेत ना ॥ ४ ॥
स्नातश्चन्दनलिप्ताङ्गः सुगन्धः सुमनोऽन्वितः ।
भुक्तवृष्यः सुवसनः सुवेशः समलङ्कृतः ॥ ५ ॥

ताम्बूलवदनः पत्न्यामनुरक्तोऽधिकस्मरः ।
पुत्रार्थी पुरुषो नारीमुपेयाच्छयने शुभे ॥ ६ ॥
भार्य्यां रूपगुणोपेतां तुल्यशीलां कुलोद्भवाम् ।
अतिकामोऽभिकामान्तु हृष्टो हृष्टामलङ्कृताम् ।
सेवेत प्रमदां युक्त्या वाजीकरणबृंहितः ॥ ७ ॥
अत्याशितोऽधृतिः क्षुद्वान्सव्यथाङ्गः पिपासितः ।
बालो वृद्धोऽन्यवेगार्त्तस्त्यजेद्रोगी च मैथुनम् ॥ ८ ॥
रजस्वलामकामाञ्च मलिनामप्रियां तथा ।
वर्णवृद्धां वयोवृद्धां तथा व्याधिप्रपीड़िताम् ॥ ९ ॥
हीनाङ्गीं गर्भिणीं द्वेष्यां योनिरोगसमन्विताम् ।
सगोत्रां गुरुपत्नीञ्च तथा प्रव्रजितामपि ।
नाभिगच्छेत्पुमान्नारीं भूरिवैगुण्यशङ्कया ॥ १० ॥
रजस्वलां गतवतो नरस्यासंयतात्मनः ।
दृष्ट्यायुस्तेजसां हानिर्महाधर्म्मो भवेत्ततः ॥ ११ ॥
लिङ्गिनीं गुरुपत्नीञ्च सगोत्रामथ पर्व्वसु ।
वृद्धाञ्च सन्ध्ययोश्चापि गच्छतो जीवनक्षयः ॥ १२ ॥
गर्भिण्यां गर्भपीड़ा स्याद्व्याधितायां बलक्षयः ।
हीनाङ्गीं मलिनां द्वेष्यां क्षामां वन्ध्यामसंवृते ।
देशेऽभिगच्छतो रेतः क्षीणं म्लानं मनो भवेत् ॥ १३ ॥
स्नानं सशर्करक्षीरं भक्ष्यमैक्षवसंस्कृतम् ।
वातो मांसरसः स्वप्नो सुरतान्ते हिता अमी ।
अतिव्यवायाज्जायन्ते रोगाश्चातीव दारुणाः ॥ १४ ॥
पुष्टिवर्णबलोत्साहं वह्निदीप्तिं करोति हि ।
यो लेढ़ि शयनसमये मधुमिश्रं वीजपूरदलचूर्णम् ॥ १५ ॥

इति रात्रिचर्य्या समा[illegible]

## प्रभाते जलपानविधिः—नियमश्च ।

अर्शःशोथग्रहण्यो ज्वरजठरजराकुष्ठमेदोविकारो
मूत्राघातास्रपित्तश्रवणगलशिरःश्रोणिशूलाक्षिरोगाः ।
ये चान्ये वातपित्तक्षतजकफकृता व्याधयः सन्ति जन्तो-
स्तांस्तानभ्यासयोगादपहरति पयः पीतमन्ते निशायाः ॥ १ ॥

सवितुः समुदयकाले प्रसृतीः सलिलस्य पिबेदष्टौ ।
रोगजरापरिमुक्तो जीवेद्वत्सरशतं साग्रम् ॥ २ ॥

नासारन्ध्रेणोषसि जलपानगुणः ।

विगतघननिशीथे प्रातरुत्थाय नित्यं
पिबति यदि नरो यो घ्राणरन्ध्रेण वारि ।
स भवति मतिपूर्णश्चक्षुषा तार्क्ष्यतुल्यो
वलिपलितविहीनः सर्व्वरोगैर्विमुक्तः ॥ १ ॥

पातव्यं नासया नीरं प्रसृतित्रयमात्रया ।
व्यङ्गवलीपलितघ्नं पीनसवैस्वर्य्यकासशोथहरम् ॥ २ ॥

स्नेहे पीते क्षते शुद्धावाध्माने स्तिमितोदरे ।
हिक्कायां कफवातोत्थे व्याधौ तद्वारि वारयेत् ॥ ३ ॥

इति भावप्रकाशे ।

## अथ सौभाग्यकरणप्रयोगः ।

जात्यं मनोभवसुखं सुभगस्य सर्व्व-
माभासमात्रमितरस्य मनोवियोगात् ।
चित्तेन भावयति दूरगतापि यं स्त्री
गर्भं बिभर्त्ति सदृशं पुरुषस्य तस्य ॥ १ ॥

भङ्क्त्वा काण्डं पादपस्योप्तमुर्व्व्यां वीजं वास्यां नान्यतामेति यद्वत् ।
एवं ह्यात्मा जायते स्त्रीषु भूयः कश्चित्तस्मिन्वैनयोगाद्विशेषः ॥२॥

आत्मा सहैति मनसा मन इन्द्रियेण
स्वार्थेन चेन्द्रियमिति क्रम एष शीघ्रः ।
योगोऽयमेव मनसः किमगम्यमस्ति
यस्मिन्मनो व्रजति तत्र गतोऽयमात्मा ॥ ३ ॥
आत्मायमात्मनि गतो हृदयेऽपि सूक्ष्मो
ग्राह्योऽचलेन मनसा सततामियोगात् ।
यो यं विचिन्तयति याति स तन्मयत्वं
यस्मादतः सुभगमेव गता युवत्यः ॥ ४ ॥

दाक्षिण्यमेकं सुभगत्वहेतुर्व्विद्वेषणं तद्विपरीतचेष्टा ।
मन्त्रौषधाद्यैः कुहकप्रयोगैर्भवन्ति दोषा बहवो न शर्म्म ॥ ५ ॥
वाल्लभ्यमायाति विहाय मानं दौर्भाग्यमेवाप्नुतेऽभिमानः ।
कृच्छ्रेण संसाधयतेऽभिमानी कार्य्याण्ययत्नेन वदन् प्रियाणि ॥ ६ ॥
तेजो न तद्यत्प्रियसाहसत्वं वाक्यं न चानिष्टमसत्प्रणीतम् ।
कार्य्यस्य गत्वान्तमनुद्धता ये तेजस्विनस्ते न विकत्थना ये ॥ ७ ॥
यः सर्व्वजन्यं सुभगत्वमिच्छेद्गुणान्स सर्व्वस्य वदेत्परोक्षे ।
प्राप्नोति दोषानसतोऽप्यनेकान् परस्य यो दोषकथां करोति ॥८॥
सर्व्वोपकारानुगतस्य लोकः सर्व्वोपकारानुगतो नरस्य ।
कृत्वोपकारं द्विषतां विपत्सु या कीर्त्तिरल्पेन न सा शुभेन ॥ ९ ॥
तृणैरिवाग्निः सुतरां विवृद्धिमाच्छाद्यमानोऽपि गुणोऽभ्युपैति ।
स केवलं दुर्ज्जनभावमेति हन्तुं गुणान्वाञ्छति यः परस्य ॥ १० ॥

इति सौभाग्यकरणं चोक्तं बृहत्संहितायाम् ।

## अथ दीपलक्षणम् ।

वामावर्त्ते मिलितकिरणः सस्फुलिङ्गोऽल्पमूर्त्तिः
क्षिप्रं नाशं व्रजति विमलस्नेहवर्त्त्यन्वितोऽपि ।
दीपः पापं कथयति फलं शब्दवान्वेपनश्च
व्याकीर्णार्चिर्विशलभमरुद्‌यश्च नाशं प्रयाति ॥ १ ॥
दीपः संहतमूर्त्तिरायततनुर्निर्वेपनो दीप्तिमान्
निःशब्दो रुचिरः प्रदक्षिणगतिर्वैदूर्य्यहेमद्युतिः ।
लक्ष्मीं क्षिप्रमभिव्यनक्ति सुचिरं यश्चोद्यतं दीप्यते
शेषं लक्षणमग्निलक्षणसमं योज्यं यथायुक्तितः ॥ २ ॥

इति दीपलक्षणं बृहत्संहितायाम् ।

## अथाचारवर्णनम् ।

मैत्रीं सद्भिः समं कुर्य्यात्स्नेहं सत्सु तु सर्व्वदा ।
संसर्गं साधुभिः कुर्य्यादसत्सङ्गं परित्यजेत् ॥ १ ॥
सत्सु सर्व्वथा सज्जनेषु । मनोवाक्कायकर्म्मभिः ।
सेवेत देवभूदेवहृद्धवैद्यनृपातिथीन् ।
विमुखान्नार्थिनः कुर्य्यान्नावमन्येत कानपि ॥ २ ॥
गुरूणां सन्निधौ तिष्ठेत्सदैव विनयान्वितः ।
पादप्रसारणादीनि तत्र नैव समाचरेत् ॥ ३ ॥
अपकारपरेऽपि स्यादुपकारपरः पुमान् ।
आत्मवत्सकलान् पश्येत् वैरिणो दूरतो वसेत् ॥ ४ ॥
न किञ्चिदात्मनः शत्रुं नात्मानं कस्यचिद्रिपुम् ।
प्रकाशयेन्नापमानं न च निःस्नेहतां प्रभोः ॥ ५ ॥

नात्मानमुदके पश्येन्न नग्नः प्रविशेज्जलम् ।
तथा नाज्ञातगाम्भीर्य्यं न हिंस्रप्राणिसेवितम् ॥ ६ ॥
काले हितं मितं सत्यं संवादमधुरं वदेत् ।
भुञ्जीत मधुरप्रायं स्निग्धं काले हितं मितम् ॥ ७ ॥
न रात्रौ दधि भुञ्जीत न च निर्लवणं तथा ।
नामुद्गसूपं नाक्षौद्रं न चाप्यघृतशर्करम् ॥ ८ ॥
जनस्याशयमालक्ष्य यो यथा परितुष्यति ।
तं तथैवानुवर्त्तेत पराराधनपण्डितः ॥ ९ ॥
नैकः सुखी न सर्व्वत्र विश्वस्तो न च शङ्कितः ।
नोद्यमे विरमेत् क्वापि हेतावीर्षेत् फले न तु ॥ १० ॥

हेतौ फलहेतौ । उद्यमे फले धनादौ ।

वेगान्न धारयेज्जातु मनोवेगान्विधारयेत् ।
न पीड़येदिन्द्रियाणि न चैतानतिलालयेत् ॥ ११ ॥
वर्षातपादिषु च्छत्री दण्डी रात्रौ भयेषु च ।
सोपानत्कस्तनुं रक्षेत् विचरेद्युगमात्रदृक् ॥ १२ ॥

युगमात्रदृक् अग्रतो हस्तचतुष्टयमितां भूमिं पश्यन् ।

नदीन्तरेन्न बाहुभ्यां नाग्निस्कन्धमभिव्रजेत् ।
सन्दिग्धनावं वृक्षञ्च नारोहेद्दुष्टयानकम् ॥ १३ ॥

दुष्टयानकं दुष्टगजघोटकादि ।

नासंवृतं मुखं कुर्य्यात्सभायाञ्च विचक्षणः ।
कासं श्वासं तथोद्गारं जृम्भणं क्षवथुं तथा ॥ १४ ॥
नासिकां न विकुष्णीयान्नासीतोत्कटुकः क्वचित् ।
नोर्द्ध्वजानुश्चिरं तिष्ठेन्न नखेन लिखेद्भुवम् ॥ १५ ॥

उत्कटुकः निरासनः ।

सम्मार्ज्जनीरजो नैव देहे दद्यात्कदाचन ।
न नखेन तृणं छिन्द्यान्नोच्छिष्टो ब्राह्मणं स्पृशेत् ॥ १६ ॥
नोपरक्तं न चोद्यन्तं नास्तं यातं दिवाकरम् ।
सर्व्वथा न समीक्षेत न जले प्रतिविम्बितम् ॥ १७ ॥
नेक्षेत सततं सूक्ष्मं दीप्तामेध्याप्रियाणि च ।
पौरन्दरं धनुर्नैव दर्शयेत्कमपि क्वचित् ॥ १८ ॥
नेच्छेद्बलवता युद्धं न भारं शिरसा वहेत् ।
गात्रं न नादयेत्केशान् हस्तेन धुनुयान्न च ॥ १९ ॥
न गच्छेत्पूज्ययोर्मध्ये दम्पत्योरन्तरेण च ।
रिपोरन्नं न भुञ्जीत गणिकान्नमपि क्वचित् ॥ २० ॥
प्रतिभूर्न भवेत्क्वापि न च साक्षी वृथा भवेत् ।
स्थायी न धारयेज्जातु द्यूतं दूरात्परित्यजेत् ॥ २१ ॥

प्रतिभूः जामिन इति भाषा । स्थायी थाती इति भाषा ।

विश्वासं नाचरेत्स्त्रीणां ताः स्वतन्त्राश्च नाचरेत् ।
रक्षणीयाः सदा यत्नाद्यौवने तु विशेषतः ॥ २२ ॥
न भिन्ने शयने सुप्यान्नानेकविवरेऽपि च ।
नैको देवालये नैव रात्रौ तरुतलेऽपि च ॥ २३ ॥
एवं दिनानि गमयेत्सदाचारपरः सदा ।
ततो रात्रिप्रयुक्तानि कुर्य्यात्कर्म्माणि मानवः ॥ २४ ॥
इत्याचारं समासेन भाषितं यः समाचरेत् ।
स विन्दत्यायुरारोग्यं प्रीतिं धर्म्मं धनं यशः ॥ २५ ॥

इत्याचारो भावप्रकाशे ।

अथाचारप्रशंसनम् ।

नास्तिक्यात्कर्म्महानौ तु मासेन पतितः स्मृतः ।
द्वादशाब्दव्रतेनैव तस्य शुद्धिस्तु नान्यथा ॥ १ ॥
तं निरीक्ष्यार्कमीक्षेत स्पर्शे स्नायात्सचेलकम् ।
तेन सह चोपहास्यं कुर्व्वन् शब्देन तत्समः ।
तदन्नं भुक्त्वा सद्यस्तु स सर्व्वो भ्रश्यते वनि ॥ २ ॥
बाहुल्यं वा स्वगृह्योक्तं यस्य कर्म्म प्रकीर्त्तितम् ।
तस्य तावति शास्त्रार्थे कृते सर्व्वः कृतो भवेत् ॥ ३ ॥

इति कूर्म्मपुराणे ॥

इत्येतदखिलं प्रोक्तमहन्यहनि वै मया ।
ब्राह्मणानां कृत्यजातमपवर्गफलप्रदम् ॥ १ ॥
नास्तिक्यादथवालस्याद्ब्राह्मणो न करोति यः ।
स याति नरकान् घोरान् काकयोनौ प्रजायते ॥ २ ॥

इति गोभिलः ॥

यो विप्रः कृतनित्यस्तु स सर्व्वान् कृतवान्मखान् ।
स स्नातः सर्व्वतीर्थेषु तप्तं तेनाखिलं तपः ॥ ३ ॥

इत्याचारप्रशंसनम् ॥

इति यजुर्व्वेदीयनित्यकर्म्मपद्धतिः समाप्ता ।

—

# परिशिष्टम्।

---

## तुलसीस्नानमन्त्रः।

गोविन्दवल्लभां देवीं भक्तचैतन्यकारिणीम्।
स्नापयामि जगद्धात्रीं विष्णुभक्तिप्रदायिनीम्॥

तुलसीपूजा मन्त्रोद्धारविधिश्च।

श्रीं ह्रीं क्लीं ऐं

लक्ष्मी माया काम वाणी वीजपूर्व्वं दशाक्षरम्।

वृन्दावत्यै स्वाहा

वृन्दावतीं चतुर्थ्यन्तां वह्निजायान्वितां वदेत्॥

ब्रह्मवैवर्त्ते।

### तुलसीस्तवः।

तुलसी सर्व्वभूतानां महापातकनाशिनी।
अपवर्गप्रदे देवि वैष्णवानां प्रिया सदा॥
सत्ये सत्यवती चैव त्रेतायां मानवी तथा।
द्वापरे त्ववतीर्णासि वृन्दा त्वं तुलसी कलौ॥

### तुलसीप्रणामः।

वृन्दायै तुलसीदेव्यै प्रियायै केशवस्य च।
विष्णुभक्तिप्रदायिन्यै सत्यवत्यै नमो नमः॥
त्वन्मूले सर्व्वतीर्थानि त्वदग्रे सर्व्वदेवताः।
त्वत्पत्रे सर्व्वयज्ञाश्च तुलस्यै ते नमो नमः॥

### तुलसीमृत्तिकाग्रहणमाहात्म्यम् ।

यथा रविस्तमोध्वंसी पापध्वंसी यथा हरिः ।
ललाटस्था पापहरा तुलसीमूलमृत्तिका ॥

### तुलसीप्रदक्षिणमन्त्रः ।

यानि कानि च पापानि ब्रह्महत्यादिकानि च ।
तानि तानि प्रणश्यन्ति प्रदक्षिणं पदे पदे ॥

### तुलसीचयनमन्त्रः ।

तुलस्यमृतनामासि सदा त्वं केशवप्रिया ।
केशवार्थे चिनोमि त्वां वरदा भव शोभने ॥

पद्मपुराणे ।

### तुलसीचयने निषिद्धदिवसाः ।

संक्रान्त्यां पक्षयोरन्ते द्वादश्यां निशि सन्ध्ययोः ।
तुलसीं ये विचिन्वन्ति ते कृन्तन्ति हरेः शिरः ॥

### निषिद्धदिवसे चयनमन्त्रः ।

त्वदङ्गसम्भवेन त्वां पूजयामि यथा हरिम् ।
तथा नाशय विघ्नं मे ततो यामि परां गतिम् ॥

---

## अश्वत्थपूजा तत्प्रदक्षिणविधिश्च ।

अश्वत्थस्याग्निकोणे च वसेत्साधकसत्तमः ।
कुर्य्यादासनशुद्ध्यादींस्ततोऽश्वत्थं प्रपूजयेत् ॥

ॐ आरात्ते इति मन्त्रस्य आरण्यक ऋषिः अनुष्टुप् छन्दः अश्वत्थरूपी नारायणो देवता निरञ्जनो वीजं श्रीः शक्तिः अश्वत्थरूपिणो नारायणस्य प्रीतये ममाभीष्टसिद्धेय विनियोगः ।

ॐ आरात्ते अङ्गुष्ठाभ्यां नमः। ॐ अग्निरस्त्वारात् तर्ज्जनीभ्यां स्वाहा। ॐ परशुरस्तु ते मध्यमभ्यां वषट्। ॐ निवाते त्वाभिवर्षतु अनामिकाभ्यां हूं। ॐ स्वस्ति तेऽस्तु वनस्पते कनिष्ठाभ्यां वौषट्। ॐ स्वस्ति मेऽस्तु वनस्पते करतलकरपृष्ठाभ्यां फट्।

एवमङ्गन्यासः। अस्त्राय फड़िति विशेषः।

ध्यानम्।

श्वेतवर्णं सलक्ष्मीकं भुजाष्टकविभूषितम्।
अभयं वरदं शान्तं खड्गखेटकधारिणम्॥
शङ्खचक्रधरं देवं पीतवासःसमन्वितम्।
धनुर्ब्बाणसमायुक्तं चिन्तयेत् पुरुषोत्तमम्॥
नारायणस्य मनुना मूलेन प्रणवेन वा।
पिप्पलद्रुममभ्यर्च्य दद्यादर्घं प्रयत्नतः॥
मूले विष्णुश्च रुद्रश्च शिखायाञ्च प्रजापतिः।
पत्रनो जाह्नवीतोयं गृहाणार्घं नमोऽस्तु ते॥

ॐ आरात्ते अग्निरस्त्वारात् परशुरस्तु ते निवाते त्वाभिवर्षतु।
स्वस्ति तेऽस्तु वनस्पते स्वस्ति मेऽस्तु वनस्पते॥

इति पठित्वा दशधा जपेत्। ततः अनेन सप्तवारं प्रदक्षिणं कुर्य्यात्।

ततः स्तुतिं पठेत्।

मूलतो ब्रह्मरूपाय मध्यतो विष्णुरूपिणे।
अग्रतः शिवरूपाय वृक्षराजाय ते नमः॥
अग्निगर्भ शमीगर्भ यज्ञगर्भ सनातन।
हिरण्यगर्भ श्रीगर्भ वेदगर्भ नमोऽस्तु ते॥

चक्षुःस्पन्दं भुजस्पन्दं दुःस्वप्नं दुर्व्विचिन्तनम्।
शत्रूणाञ्च समुत्थानमश्वत्थ प्रतिहन्यताम्॥
एकादशोऽसि रुद्राणां वसूनामपि चाष्टमः।
नारायणोऽसि देवानां वृक्षराजोऽसि पिप्पलः॥
त्वां दृष्ट्वा मुच्यते पापात् स्पृष्ट्वा लक्ष्मीः प्रवर्द्धते।
प्रदक्षिणाद्भवेदायुः सदाश्वत्थ नमोऽस्तु ते॥
अश्वत्थ यस्मात्त्वयि वृक्षराजे
नारायणस्तिष्ठति सर्व्वकालम्।
तस्मात् शुचिस्त्वं सततं तरूणां
धन्योऽसि चारिष्टविनाशनोऽसि॥
क्षीरदस्त्वं फलं दाता येन श्रीस्त्वां निषेवते।
तेन सत्येन वृक्षेन्द्र मामपि श्रीर्निषेवताम्॥

इति नमस्कारः।

ब्राह्मेण मूलं संस्पृश्य वैष्णवेन च मध्यमम्।
शैवेन संस्पृशेदग्रं साधकोऽश्वत्थशाखिनः॥

ब्राह्मादिमन्त्रो यथा—

ॐ आब्रह्मन् ब्राह्मणो ब्रह्मवर्च्चसि जायतामाराष्ट्रे राजन्यः शूर ईषव्योतिव्याधिर्महारथो जायताम्।

ॐ तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः।
दिवीव चक्षुराततम्॥

ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्।
उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्॥

वृक्षं स्पृशेत्।

भौमार्कभृगुवारेषु द्वादश्यां निशि सन्ध्ययोः।
अश्वत्थस्पर्शनं पुंसां कुलक्षयकरं ध्रुवम्॥
शनैश्चरदिनेऽश्वत्थमूलमालभ्य पाणिना।
साक्षान्मृत्योर्विमुच्येत किं पुनस्त्वपमृत्युतः॥
कुर्य्यात् सहस्रमपमृत्युविनाशनाय
बोधिद्रुमस्य परमस्य प्रदक्षिणं यः।
मृत्युञ्जयं प्रतिऋचां शतकं जपेच्च
मृत्युञ्जयोऽस्य शरणं स भवेच्चिरायुः॥
अश्वत्थवृक्षं तुलसीसमेतं
प्रदक्षिणं यः कुरुते मनुष्यः।
पितॄन् स उद्धृत्य विमानरूढ़ो
वैकुण्ठमाप्नोति सदारपुत्त्रः॥

इति अश्वत्थप्रदक्षिणविधिः।

---

## पञ्चदेवानां चण्डनियमः।

रवौ तेजो गणे कुण्डो देव्यां मातङ्गिनी तथा।
विश्वक्सेनो हरौ चैव शिवे चण्डो विधीयते॥

पञ्चदेवानां नैवेद्यसमर्पणम्।

निवेदयामि भगवन् जुषाणेदं हविर्हरे।
देवीपक्षे "भगवति"।

पञ्चदेवानां प्रदक्षिणविधिः।

देव्यामेकं रवौ सप्त त्रीणि कुर्य्याद्विनायके।
चत्वारि केशवे चैव शिवे चार्द्धप्रदक्षिणम्॥

## पर्य्युषितद्रव्याणां वर्ज्यावर्ज्यनियमः ।

वर्ज्यं पर्य्युषितं पुष्पं वर्ज्यं पर्य्युषितं जलम् ।
न वर्ज्यं तुलसीपत्रं न वर्ज्यं जाह्नवीजलम् ॥

बृहन्नारदीये ।

तुलसी पर्य्युषिता नैव बिल्वन्तु त्रिदिनावधि ।
पद्मं पञ्चदिनात्त्याज्यं शेषं पर्य्युषितं विदुः ॥

पद्मपुराणे ।

प्रहरं तिष्ठते जातिः करवीरमहर्निशम् ।
तुलस्यां बिल्वपत्रेषु सर्व्वेषु जलजेषु च ।
न पर्य्युषितदोषोऽस्ति मालाकारगृहेऽपि च ॥

भविष्यपुराणे ।

पात्रादिद्रव्याणां शुद्ध्यशुद्धी आह ।

द्रव्याणां शुद्ध्यशुद्धी च द्रव्येण वचनेन च ।
संस्कारेणाथ कालेन महत्त्वाल्पतयाथवा ॥

इति पाराशरिः ।

अथातो द्रव्यसंशुद्धिः पराशरमुखोदिता ।
भस्मना शुद्ध्यते कांस्यं ताम्रमम्लेन शुद्ध्यति ।
रजसा शुद्ध्यते नारी नदी वेगेन शुद्ध्यति ॥
दारुपात्राणि सर्व्वाणि लोहेनोल्लिखने शुचिः ।
मृद्भाण्डो दहनाच्छुद्धो गोबालैः फलसम्भवाः ॥

इति पराशरः ।

## सर्व्वदेवानां मूलमन्त्रोद्धारः ।

प्रणवादि-नमोऽन्तञ्च चतुर्थ्यन्तञ्च सत्तम ।
देवतायाः स्वकं नाम मूलमन्त्रः प्रकीर्त्तितः ॥

इति गारुड़े ।

## देवानां पूजाक्रमः ।

पत्रैः पुष्पैस्तथा धूपैर्नैवेद्यैश्च पृथग्विधैः ।
नीराजनैश्च ताम्बूलैः सकर्पूरैर्विशेषतः ॥

पद्मपुराणे ।

पत्रपुष्पफलादीनाम् ऊर्द्धाधोमुखे अर्पणनियमः ।

पत्रं पुष्पं फलं देवे न प्रदद्यादधोमुखम् ।
सदा मालूरपत्रन्तु प्रदद्यादप्यधोमुखम् ।
पुष्पाञ्जलौ न तद्दोषस्तथा पर्य्युषितस्य च ॥

मन्त्रमहोदधौ ।

विष्णुनैवेद्यम् अन्यदेवाय अर्पणनियममाह ।

विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम् ।
पितृभ्यश्चैव तद्देयं तदानन्त्याय कल्पते ॥
पितृशेषन्तु यो दद्याद्धरये परमात्मने ।
रेतोधाः पितरस्तस्य भवन्ति क्लेशभागिनः ॥

प्रयोगपारिजाते ।

एकादशस्थले पूजाधिष्ठानमाह ।

सूर्य्योऽग्निर्ब्राह्मणो गावो वैष्णवः खं मरुज्जलम् ।
भूरात्मा सर्व्वभूतानि भद्रपूजापदानि मे ॥

सूर्य्ये तु विद्यया त्रय्या हविषाग्नौ यजेत माम् ।
आतिथ्येन तु विप्राग्र्ये गोष्वङ्गयवसादिना ॥
वैष्णवे बन्धुसत्कृत्या हृदि खे ध्याननिष्ठया ।
वायौ मुख्यधिया तोये द्रव्यैस्तोयपुरस्कृतैः ॥
स्थण्डिले मन्त्रहृदयैर्भोगैरात्मनमात्मनि ।
क्षेत्रज्ञं सर्व्वभूतेषु समत्वेन यजेत माम् ॥
धिष्ण्येष्वेष्विति मद्रूपं शङ्खचक्रगदाम्बुजैः ।
युक्तं चतुर्भुजं शान्तं ध्यायन्नर्च्चेत् समाहितः ॥

एकादशस्कन्धे ।

---

## आरात्रिकक्रमः ।

आदौ चतुष्पादतलैकदेशे
द्वे नाभिदेशे मुख एकवारम् ।
सर्व्वाङ्गदेशेषु च सप्तवारम्
आरात्रिकं भक्तजनः प्रकुर्य्यात् ॥

इति देवार्च्चनचन्द्रिकायाम् ।

---

## अथ सर्व्वदेवपूजाप्रारम्भः ।

ॐ श्रीमन्महागणाधिपतये नमः । ॐ इष्टदेवताभ्यो नमः । ॐ कुलदेवताभ्यो नमः । ॐ ग्रामदेवताभ्यो नमः । ॐ स्थानदेवताभ्यो नमः । ॐ वास्तुदेवताभ्यो नमः । ॐ सर्व्वेभ्यो देवेभ्यो नमः । ॐ सर्व्वेभ्यो ब्राह्मणेभ्यो नमः । ॐ एतत्कर्म्म-प्रधानदेवताभ्यो नमः । ॐ आदित्यादिनवग्रहदेवताभ्यो नमः ।

सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ।
लम्बोदरश्च विकटो विघ्ननाशो गणाधिपः ॥
धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ।
द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥
विद्यारम्भे विवाहे च प्रवासे दुर्गमे तथा ।
सङ्ग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ॥
शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्व्वविघ्नोपशान्तये ॥
सर्व्वमङ्गलमङ्गल्ये शिवे सर्व्वार्थसाधिके ।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥

सर्व्वदा सर्व्वकार्य्येषु नास्ति तेषाममङ्गलम् ।
येषां हृदिस्थो भगवान्मङ्गलायतनं हरिः ॥
तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव ।
विद्याबलं दैवबलं तदेव लक्ष्मीपतेरङ्घ्रियुगं स्मरामि ॥
लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ।
येषामिन्दीवरश्यामो हृदयस्थो जनार्द्दनः ॥
विनायकं गुरुं भानुं ब्रह्मविष्णुमहेश्वरान् ।
सरस्वतीं प्रणम्यादौ सर्व्वकार्य्यार्थसिद्धये ॥
अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः ।
सर्व्वविघ्नच्छिदे तस्मै गणाधिपतये नमः ॥
सर्व्वेष्वारब्धकार्य्येषु त्रयस्त्रिभुवनेश्वराः ।
देवा दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्द्दनाः ॥

श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्त्तमानस्य ब्रह्मणोऽद्य द्वितीयपरार्द्धे विष्णुपादश्वेतवराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशयुगचतुष्के कलियुगे प्रथमचरणे भारतवर्षे जम्बुद्वीपे दण्डकारण्यदेशे गोदावर्य्या दक्षिणे उत्तरे वा तीरे शालिवाहनशके अमुकनामसंवत्सरे अमुके अयने अमुक ऋतौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकराशौ स्थिते श्रीभास्करे अमुकराशौ स्थिते चन्द्रमसि एवं यथास्थानावस्थितेषु भौमादिग्रहयोगलग्नकरणमुहूर्त्तांशकेषु एवंविधविशेषणविशिष्टायां पुण्यतिथौ आत्मनः पुराणोक्तफलप्राप्त्यर्थम् अस्माकं सकुटुम्बानां सपरिवाराणां द्विपदचतुष्पदसहितानां क्षेमस्थैर्य्याभयायुरारोग्यैश्वर्य्याभिवृद्ध्यर्थं समस्तमङ्गलावाप्त्यर्थम् अमुकदेवताप्रीत्यर्थं यथामिलितोपचारद्रव्यैः ध्याना-

वाहनादिषोड़शोपचारैः पूजां करिष्ये। तथा मम इह जन्मनि जन्मान्तरेषु च अखण्डसौभाग्यादिमनोवाञ्छितसिद्ध्यर्थम् अमुक-देवपूजनमहं करिष्ये। तदङ्गकलसाद्यर्च्चनं करिष्ये।

कलसस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः।
मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणः स्मृतः।
कुक्षौ तु सागराः सर्व्वे सप्तद्वीपा वसुन्धरा॥
ऋग्वेदोऽथ यजुर्व्वेदः सामवेदो ह्यथर्व्वणः।
अङ्गैश्च सहिताः सर्व्वे कलसन्तु समाश्रिताः॥
अत्र गायत्री सावित्री शान्तिः पुष्टिकरी तथा।
आयान्तु देवपूजार्थं दुरितक्षयकारकाः॥
गङ्गे च यमुने चैव गोदावरि सरस्वति।
नर्म्मदे सिन्धु कावेरि जलेऽस्मिन्सन्निधिं कुरु॥

ॐ वरुणाय नमः।

सर्व्वोपचारार्थे गन्धाक्षतपुष्पं सम्पूज्य।

अपवित्रः पवित्रो वा सर्व्वावस्थां गतोऽपि वा।
यः स्मरेत् पुण्डरीकाक्षं स वाह्याभ्यन्तरः शुचिः॥

पूजाद्रव्याणि आत्मानञ्च प्रोक्षयेत्। अथ ध्यानङ्कृत्वा आवा-हनं कुर्य्यात्।

आगच्छ देवदेवेश* तेजोराशे जगत्पते।
क्रियमाणां मया पूजां गृहाण सुरसत्तम†॥

अमुकदेव‡मावाहयामि।

---

* देवीपक्षे देवदेवेशि।		† देवीपक्षे सुरसत्तमे।

‡ देवीपक्षे अमुकां देवीम्।

नानारत्नसमायुक्तं कार्त्तस्वरविभूषितम् ।
आसनं देवदेवेश प्रीत्यर्थं प्रतिगृह्यताम् ॥
अमुकदेवाय आसनार्थे पञ्च पुष्पाणि समर्पयामि ।
स्वागते अमुकदेव स्वागतमिति पृच्छेत् ।
पाद्यं गृहाण देवेश सर्व्वक्षेमसमर्थ भोः ।
भक्त्या समर्पितं देव लोकनाथ नमोऽस्तु ते ॥
अमुकदेवाय पाद्यं नमः ।
नमस्ते देवदेवेश नमस्ते धरणीधर ।
नमस्ते जगदाधार अर्घो नः प्रतिगृह्यताम् ॥
गन्धपुष्पाक्षतैर्युक्तं फलद्रव्यसमन्वितम् ।
गृहाण तोयमर्घार्थं परमेश्वर वत्सल ॥
अमुकदेवाय अर्घः स्वाहा ।
कर्पूरवासितं तोयं मन्दाकिन्याः समाहितम् ।
आचम्यतां जगन्नाथ मया दत्तं हि भक्तितः ॥
अमुकदेवाय आचमनं स्वधा ।
दधिमधुघृतयुक्तं कांस्यपात्रे स्थितं पिधानम् ॥
एतत्तु मधुपर्कञ्च महर्षिभिरुदाहृतम् ॥
मधुपर्कं सदा हृद्यं देवर्षीणां प्रियङ्करम् ।
मया निवेदितं भक्त्या गृहाण तुष्टिदो भव ॥
अमुकदेवाय मधुपर्कं स्वधा ।
पुनः आचमनं स्वधा ।
गङ्गा-सरस्वती-रेवा-पयोष्णी-नर्म्मदा-जलैः ।
स्नापितोऽसि मया देव अतः शान्तिं कुरुष्व मे ॥
अमुकदेवाय स्नानीयं समर्पयामि ।

कामधेनुसमुद्भूतं देवर्षिपितृतृप्तिदम् ।
पयो ददामि देवेश स्नानार्थं प्रतिगृह्यताम् ॥
अमुकदेवं पयसा स्नापयामि । पुनः शुद्धोदकम् ।
चन्द्रमण्डलसङ्काशं सर्व्वदेवप्रियं दधि ।
स्नानार्थं ते मया दत्तं प्रीत्यर्थं प्रतिगृह्यताम् ॥
अमुकदेवं दध्ना स्नापयामि । पुनः शुद्धोदकम् ।
आज्यं सुराणामाहार आज्यं यज्ञे प्रतिष्ठितम् ।
आज्यं पवित्रं परमं स्नानार्थं प्रतिगृह्यताम् ॥
अमुकदेवं घृतेन स्नापयामि । पुनः शुद्धोदकम् ।
सर्व्वौषधिसमुत्पन्नं पीयूषसदृशं मधु ।
स्नानार्थं ते प्रयच्छामि गृह्यतां परमेश्वर ॥
अमुकदेवं मधुना स्नापयामि । पुनः शुद्धोदकम् ।
इक्षुदण्डसमुद्भूत-दिव्यशर्करयान्वितम् ।
स्नापयामि मया भक्त्या प्रीतो भव सुरेश्वर ॥
अमुकदेवं शर्करया स्नापयामि । पुनः शुद्धोदकम् ।
कर्पूरैलासमायुक्तं सुगन्धद्रव्यसंयुतम् ।
गन्धोदकेन स्नपनं देवेश प्रतिगृह्यताम् ॥
अमुकदेवं गन्धोदकेन स्नापयामि ।
सर्व्वभूषाधिके सौम्ये लोकलज्जानिवारणे ।
मयोपपादिते तुभ्यं वाससी प्रतिगृह्यताम् ॥
अमुकदेवाय वस्त्रयुग्मं समर्पयामि ।
देवदेव नमस्तेऽस्तु त्राहि मां भवसागरात् ।
ब्रह्मसूत्रं सोत्तरीयं गृहाण पुरुषोत्तम ॥
अमुकदेवाय यज्ञोपवीतं समर्पयामि ।

अलङ्कारो मया देव सुवर्णेन विनिर्म्मितः ।
प्रीत्यर्थं देवदेवेश भूषार्थं प्रतिगृह्यताम् ॥
अमुकदेवाय भूषणानि समर्पयामि ।
श्रीखण्डचन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् ।
विलेपनं सुरश्रेष्ठ चन्दनं प्रतिगृह्यताम् ॥
अमुकदेवाय चन्दनं समर्पयामि ।
सेवन्तिका-वकुल-चम्पक-पाटलाब्जैः
पुन्नाग-जाति-करवीर-रसालपुष्पैः ।
विल्व-प्रवाल-तुलसीदल-मल्लिकाभि-
स्त्वां पूजयामि जगदीश्वर मे प्रसीद ॥
अमुकदेवाय पुष्पं समर्पयामि ।
वनस्पतिरसोद्भूतो गन्धाढ्यः सुमनोहरः ।
आघ्रेयः सर्व्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥
अमुकदेवाय धूपं समर्पयामि ।
साज्यञ्च वर्त्तिसंयुक्तं वह्निना योजितं मया ।
दीपं गृहाण देवेश त्रैलोक्यतिमिरापहम् ॥
भक्त्या दीपं प्रयच्छामि देवाय परमात्मने ।
त्राहि मां निरयाद्घोराद्दीपोऽयं प्रतिगृह्यताम् ॥
अमुकदेवाय दीपं समर्पयामि ।
शर्कराखण्डखाद्यानि दधिक्षीरघृतानि च ।
आहारो भक्ष्यभोज्यञ्च नैवेद्यं प्रतिगृह्यताम् ॥
यथांशतः अमुकदेवाय नैवेद्यं समर्पयामि ।

ॐ प्राणाय स्वाहा । ॐ अपानाय स्वाहा । ॐ व्यानाय स्वाहा । ॐ उदानाय स्वाहा । ॐ समानाय स्वाहा ।

ततः पानीयं समर्पयामि इति उत्तरापोशानम्। हस्तप्रक्षालनं समर्पयामि। मुखप्रक्षालनम्, करोद्वर्त्तनार्थे चन्दनं, समर्पयामि।

पूगीफलं महादिव्यं नागवल्लीदलैर्युतम्।
कर्पूरैलासमायुक्तं ताम्बूलं प्रतिगृह्यताम्॥

अमुकदेवाय मुखवासार्थं पूगीफलयुक्तं ताम्बूलं समर्पयामि।

हिरण्यगर्भगर्भस्थं हेमवीजं विभावसोः।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे॥

अमुकदेवाय सुवर्णपुष्पदक्षिणां समर्पयामि।

चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च।
त्वमेव सर्व्वज्योतींषि आर्त्तिक्यं प्रतिगृह्यताम्॥

अमुकदेवाय महानीराजनदीपं समर्पयामि।

कर्पूरपूरेण मनोहरेण सुवर्णपात्रोदरसंस्थितेन।
प्रदीपभासा सहसागतेन नीराजनं ते जगदीश कुर्व्वे॥

अमुकदेवाय कर्पूरार्त्तिक्यदीपं समर्पयामि।

देवीपक्षे अयं विशेषः।

अक्षतास्तण्डुलाः शुभ्राः कुङ्कुमेन विराजिताः।
मया निवेदिता भक्त्या गृहाण परमेश्वरि॥

अमुकदेव्यै अक्षतान् समर्पयामि।

हरिद्रा स्वर्णवर्णाभा सर्व्वसौभाग्यदायिनी।
सर्व्वालङ्कारमुख्या हि देवि त्वं प्रतिगृह्यताम्॥

अमुकदेव्यै हरिद्रां समर्पयामि।

हरिद्राचूर्णसंयुक्तं कुङ्कुमं कामदायकम्।
वस्त्रालङ्करणं सर्व्वं देव्येतत्प्रतिगृह्यताम्॥

अमुकदेव्यै कुङ्कुमं समर्पयामि।

कज्जलं कामिकं रम्यं कामिनीकामसम्भवम् ।
नेत्रयोर्भूषणार्थाय कज्जलं प्रतिगृह्यताम् ॥
अमुकदेव्यै कज्जलं समर्पयामि ।

उदितारुणसङ्काशं जवाकुसुमसन्निभम् ।
सीमन्तभूषणार्थाय सिन्दूरं प्रतिगृह्यताम् ॥
अमुकदेव्यै सिन्दूरं समर्पयामि ।

माङ्गल्यतन्तुमणिभिर्मुक्ताफलविराजितम् ।
कण्ठस्य भूषणार्थाय प्रीत्यर्थं प्रतिगृह्यताम् ॥
अमुकदेव्यै कण्ठसूत्रं समर्पयामि ।

काञ्चनैर्निर्म्मितं दिव्यं कङ्कणञ्च सुरेश्वरि ।
हस्तालङ्करणार्थाय कङ्कणं प्रतिगृह्यताम् ॥
अमुकदेव्यै कङ्कणं समर्पयामि ।

नानाभरणशोभाढ्यं नानारत्नोपशोभितम् ।
अर्पितञ्च मया देवि तालपत्रं प्रगृह्यताम् ॥
अमुकदेव्यै ताटङ्कं समर्पयामि ।

वटसावित्रीपूजायाम् । ॐ सावित्र्यै नमः । पादौ पूजयामि । सावित्र्यै नमः । जङ्घे पूजयामि । कमलपत्राक्ष्यै नमः । कटीं पूजयामि । भूतधारिण्यै नमः । उदरं पूजयामि । गायत्र्यै नमः । कण्ठं पूजयामि । ब्रह्मप्रियायै नमः । शिरः पूजयामि ।

सत्यव्रतपूजायाम् । ॐ धात्रे नमः । पादौ पूजयामि । ज्येष्ठाय नमः । ऊरू पूजयामि । परमेष्ठिने नमः । मेढ्रं पूजयामि । अग्निरूपाय नमः । कटीं पूजयामि । वेधसे नमः । उदरं पूजयामि । पद्मनाभाय नमः । हृदयं पूजयामि । विधात्रे

नमः। कण्ठं पूजयामि। हिरण्यगर्भाय नमः। मुखं पूजयामि। ब्रह्मणे नमः। सर्व्वाङ्गं पूजयामि।

हरितालिकापूजायाम्। ॐ गौर्य्यै नमः। पादौ पूजयामि। पार्व्वत्यै नमः। गुल्फौ पूजयामि। चण्डिकायै नमः। जानुनी पूजयामि। शिवप्रियायै नमः। ऊरू पूजयामि। जगन्मात्रे नमः। गुह्यं पूजयामि। विद्याधर्य्यै नमः। कटीं पूजयामि। क्षमायै नमः। नाभिं पूजयामि। शिवायै नमः। हृदयं पूजयामि। अपराजितायै नमः। कण्ठं पूजयामि। जयन्त्यै नमः। मुखं पूजयामि। रमायै नमः। नासिकां पूजयामि। नारसिंह्यै नमः। नेत्रे पूजयामि। त्रिलोचनायै नमः। श्रोत्रे पूजयामि। माहेश्वर्य्यै नमः। ललाटं पूजयामि। हरप्रियायै नमः। शिरः पूजयामि। सर्व्वमङ्गलायै नमः। सर्व्वाङ्गं पूजयामि।

लक्ष्मीपूजायाम्। ॐ देववन्द्यायै नमः। पादौ पूजयामि। लोकवन्द्यायै नमः। जानुनी पूजयामि। सम्पत्तिदायै नमः। कटीं पूजयामि। गम्भीरनाभ्यै नमः। नाभिं पूजयामि। लोकधात्र्यै नमः। स्तनौ पूजयामि। जगद्धात्र्यै नमः। कण्ठं पूजयामि। वरदायै नमः। हस्तौ पूजयामि। धृत्यै नमः। मुखं पूजयामि। अरुन्धत्यै नमः। शिरः पूजयामि। सकलप्रियायै नमः। सर्व्वाङ्गं पूजयामि।

विष्णुपूजायाम्। ॐ मत्स्याय नमः। पादौ पूजयामि। कूर्म्माय नमः। गुल्फौ पूजयामि। वराहाय नमः। जानुनी पूजयामि। नरसिंहाय नमः। ऊरू पूजयामि। वामनाय नमः। कटीं पूजयामि। रामाय नमः। उदरं पूजयामि। श्रीरामाय

नमः । हृदयं पूजयामि । श्रीकृष्णाय नमः । मुखं पूजयामि । सहस्रशिरसे नमः । शिरः पूजयामि । अनन्ताय नमः । सर्व्वाङ्गं पूजयामि । केशवादिचतुर्व्विंशतिनामभिः पुष्पतुलस्यादिभिः पूजयेत् ।

यानि कानि च पापानि जन्मान्तरकृतानि च ।
तानि तानि विनश्यन्ति प्रदक्षिणं पदे पदे ॥
अन्यथा शरणं नास्ति त्वमेव शरणं प्रभो ।
तस्मात्कारुण्यभावेन क्षमस्व परमेश्वर ॥

अमुकदेवाय प्रदक्षिणं समर्पयामि ।

अथ वन्दनम् ।

करचरणकृतं वा कायजं कर्म्मजं वा
श्रवणनयनजं वा मानसं वापराधम् ।
विदितमविदितं वा सर्व्वमेतत्क्षमस्व
जय जय करुणाब्धे श्रीमहादेव शम्भो ॥

अमुकदेवाय मन्त्रपुष्पं समर्पयामि ।

नमः सर्व्वहितार्थाय जगदाधारहेतवे ।
साष्टाङ्गोऽयं प्रणामस्ते प्रयत्नेन मया कृतः ॥
नमोऽस्त्वनन्ताय सहस्रमूर्त्तये
सहस्रपादाक्षिशिरोरुबाहवे ।

इति पठित्वा नमस्कारं समर्पयेत् ।

आवाहनं न जानामि न जानामि विसर्ज्जनम् ।
पूजाकर्म्म न जानामि क्षमस्व परमेश्वर ॥
मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर ।
मया यत्पूजितं देव परिपूर्णं तदस्तु मे ॥

अपराधसहस्राणि क्रियन्तेऽहर्निशं मया।
दासोऽहमिति मां मत्वा क्षमस्व परमेश्वर॥
विधेहि देवि कल्याणं विधेहि विपुलां श्रियम्।
रूपं देहि जयं देहि यशो देहि द्विषो जहि॥

प्रार्थना।

यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्॥

अनेन यथामिलितोपचारद्रव्यैः कृतपूजनेन अमुकदेवः प्रीयताम्। आराध्यदेवतार्पणमस्तु।

अद्येत्यादि पूर्व्वोच्चरितैवंगुणविशिष्टायां पुण्यतिथौ मम आत्मनः पुराणोक्तफलप्राप्त्यर्थम् अमुकदेवताप्रीत्यर्थं ब्राह्मणाय उपायनदानं करिष्ये, तथा ब्राह्मणपूजनञ्च करिष्ये। महाविष्णुस्वरूपिणे ब्राह्मणायेदमासनम्, स्वागमनम्।

यस्य पादोदकं तीर्थं मुखे वेदाः प्रतिष्ठिताः।
पाद्यं गृहाण विप्राग्र्य भूमिदेव नमोऽस्तु ते॥

विष्णुस्वरूपिणे ब्राह्मणाय इदं पाद्यम्, सुपाद्यम।

भूमिदेवाग्रजन्मासि त्वं विप्र पुरुषोत्तम।
प्रत्यक्षो यज्ञपुरुषः अर्घोऽयं प्रतिगृह्यताम्॥

एष वोऽर्घः, अस्त्वर्घः। इदमाचमनीयम्, अस्त्वाचमनीयम्। गन्धाः पान्तु, सौमाङ्गल्यं चास्तु। अक्षताः पान्तु, आयुष्यमस्तु। पुष्पाणि पान्तु, सौश्रिकमस्तु। ताम्बूलानि पान्तु, ऐश्वर्य्यमस्तु। दक्षिणाः पान्तु, बहुदेयञ्चास्तु। सकलाराधनैस्वर्च्चितमस्तु, अस्तु स्वर्च्चितम्।

विप्राय वेदविदुषे श्रोत्रियाय कुटुम्बिने ।
नरकोत्तारणार्थाय अच्युत प्रीयतामिति ॥
उपायनमिदं तुभ्यं व्रतसम्पूर्त्तिहेतवे ।
पायनं द्विजवर्य्याय सहिरण्यं ददाम्यहम् ॥

इदं मनसोऽभीष्टं ब्राह्मणाय तुभ्यमहं सम्प्रददे । प्रतिगृह्यतां, प्रतिगृह्णामि । अनेनोपायनदानेन स्वेष्टामुकदेवता प्रीयताम् । तत्तद्देवतार्पणमस्तु ।

इति पुराणोक्तसर्व्वदेवपूजाविधिः समाप्तः ।

---

